# गणपतिमुनेः पत्राणि

आनन्दाश्रमः
शिरसि । १० ।३ ।३१ ।

भगवन् गुहावतार,

विदितमेव स्याद्भगवतः सुन्दरपण्डितस्य विश्वनाथस्य कपालिनश्च पत्रैरत्र मम सानुचरस्य तपश्चरित्रम्। दिनत्रयादारभ्य सर्वेषां विशेषतो मम चानुभूतयो भवन्ति विशेषतः सन्तोषदायिकाः। स्वप्नेषु बहूनां भवति भगवतो महर्षेर्दर्शनम्। भगवत्कटाक्षेणैव सेयमभिवृद्धिरिति दृढो विश्वासः सर्वेषाम्।

प्रभो ! ममात्र या निष्ठा भगवतः कटाक्षेण सम्पन्ना सा विज्ञानात्मनि भवतीति विज्ञायते। पृथगनुभवामि शरीरादात्मानं स्पष्टं गुहायाम्। तथाऽपि प्रपञ्चे पृथगनुभवो नापगतः। तस्मान्नेयं पूर्णानिष्ठेति मन्ये। तां ददातु स्वयमेव भगवान् अनेकशतयोजनलङ्घनक्षमेण कटाक्षेण। मम पूर्वा लहरी मदभरविशिष्टा केवलं शक्तिप्रवाहिनी। अधुनातना लहरी तु सुतरां लाघवप्रदा तेजःप्रवाहिनी दृश्यते। महाकार्यसिद्ध्ये भगवन्महर्षि कटाक्षचोदिताः देवताः मां संस्कुर्वन्तीति दृढो भवति मम विश्वासः।

करुणापूर्णं कटाक्षमेव प्रत्युत्तरं प्रेषयितुमर्हति भगवान्। अत्र सपत्नीकः कपाली महादेवो विश्वनाथो रङ्गः सीतारामस्य पुत्री चाश्रमे नित्याः। सुन्दरपण्डितस्तस्य भगिनी देवेन्द्रशर्मा च मिलन्ति प्रायः सन्ध्ययोः। सर्वे च भगवतः कटाक्षं प्रार्थयन्ते।

इति
"भगवतः किङ्करो वासिष्ठो गणपतिः"

***

भगवन्!

सद्दर्शनं श्वः प्रभृति संशोध्य शीघ्रमेव प्रेषयिष्यामि पादसन्निधिं प्रति।

"वासिष्ठः"

"द्वितीयं पत्रं सद्दर्शनमूलमात्रम्"

***

मङ्गलवासरः
आनन्दाश्रमः १७।३।३१।

भगवन् विश्वगुरो !

प्रतिसप्ताहमेकं पत्रं भगवत्सन्निधये प्रेषयितुं किमपि हृत्प्रेरणमासीत्। यतो मङ्गलवासरे रात्रौ भगवतोऽनुग्रहेण मे स्वात्मनिष्ठा सिद्धा; ततः स एव वासरः पत्रप्रेषणाय निर्धारितः। अत्र सर्वे कुशलिनः। तत्र भवतो निरञ्जनानन्दस्वामिनः पत्रं मिलितं विश्वनाथस्य। सामान्यतस्तत्र वार्ता काचन किञ्चिद्विषादकार्यासीत्। तथापि नित्यत्वमात्मनो विचिन्त्य समाश्वस्तोऽन्तरात्मा विश्वनाथस्य चास्मत्प्रभृतीनां च।

सद्दर्शनं स्थिरवासरे समापितम्। तत्र यथाशक्ति भगवतः शुक्लच्छन्दसां तात्पर्यमुपजातिषु सङ्गृहीतम्। अत्रास्माकं मार्गदर्शी श्रीमान् लक्ष्मणशर्मा वन्दनीयः। संशोधने मम हस्तयोः स्वातन्त्र्यमुपरुद्धमुपलक्ष्य स्वतन्त्रश्लोककणायैवोपक्रम्य पारमगमम्। यदि ममानुवादने कश्चिद्गुणः स भगवतोऽनुग्रहः।

स्थिरवासरमारभ्य मम दृष्टिर्विलक्षणासीत्। अहं पश्यामीव सर्वं पदार्थमेकसद्रूपम्। अयमभ्यासो दृढीभूयानुभवतया पर्यवसन्नो भवत्विति प्रार्थये भगवन्तम्। सलिले बुद्बुदानीव पश्यामि सत्येकस्मिन्नूपादिविकारान्। प्रयते तान् विसृज्य सर्वत्र शुद्धं सद्रूपं भोक्तुम्।

भानुवासर एव प्रहितं सद्दर्शनम्। अस्मात्पत्रात्प्रागेव स भगवत्पादसन्निधिं

प्राप्तः स्यादिति मन्ये। चिरञ्जीवी कपाली सद्दर्शनस्य टीकामस्मिन्नेव दिने कर्तुमारब्धवान्। अनुगृह्णातु भगवान् तस्याः निर्विघ्नपरिसमाप्तिर्यथा स्यात्। टीकासमाप्तेरनन्तरमेव टीकया सह तन्मुद्रणः प्रयत्नः कार्यो न प्रागिति प्रार्थये रमणाश्रमचालकम्।

अत्रैवास्ति महादेवः। सर्वमवदातम्।

इति
"भगवदनुग्रहार्थी वासिष्ठः"

***

आनन्दाश्रमः, २४।३।३१।

भगवन् कारणगुरो!

भगवदनुग्रहेण वयं मग्ना इव नित्यं तेजोरूपायां भगवत्करुणायाम्। यावच्छक्यं संस्कृत्य सद्विद्या प्रेषिता, सद्दर्शनस्य व्याख्यानं नाधुनापि कपालिना समारब्धम्। पूर्वोत्तरसन्दर्भपरीक्षायै ग्रन्थं साकल्येन सविमर्शं सम्प्रति स वीक्षते। तस्य यत्र यत्रानुवादे तात्पर्ये मूलादधिकं न्यूनं वेति संशयस्तं तं भागं पुनरहं परीक्ष्य समीकर्तुमस्मि प्रवृत्तः। अत्र वत्सो विश्वनाथोऽपि भवत्यावयोः सहायः।

"यावत्सरूपभ्रम आत्मनि स्यात्

आत्मानुभूतो यदि रूपहीनः
शिष्येत पूर्णानवधिर्दृगेका ॥" एतत्पादत्रयस्य स्थाने

"सरूपधीरात्मनि यावदस्ति ।
अरूप आत्मा यदि कः प्रपश्ये
त्साद्दृष्टिरेकानवधिर्हि पूर्णा ।" इति पादत्रयं रचितम् । सरूपबुद्धिर्जगतीश्वरे च इति प्रथमः पादो यथापूर्वम् ।

भगवन् मायापुत्रसंहारिन् ! अधुनाऽपि मम भेदधीर्नास्तमुपगता । अहं जानामि यदि तव क्षणिकः सङ्कल्प एको भवेत्, तर्हि स मे सिध्येत् सर्वात्मभावयोग इति । अपि च जानामि स्वेच्छया न ते मनसि कश्चिदपि सङ्कल्पः पदं करिष्यतीति । ईश्वर एव तादृशं सङ्कल्पं तव मनसि जनयितुं प्रभुः । पृच्छेत्कश्चित्कोऽयं द्राविडप्राणायामः ? कुत ईश्वर एव नानुगृह्णातु स्वयम् ? कः प्रयासोऽन्यस्य सङ्कल्पमुत्पादयितुम् ? सत्यम् । इदं रहस्यं कृतिजनैकवेद्यम् । जाग्रत्यवतारपुरुषे तद्द्वारैव विभुः कर्तव्यं कुर्यान्न स्वयमिति सिद्धान्तः । यो यदर्थमुत्पन्नोऽवतारपुरुषः स एव तस्य कार्यस्य निर्वोढा । नान्यः कश्चिद्देवो मनुष्यो वा । सर्वेश्वरेण हि तस्मै खलु दत्तोऽधिकारस्तादृशः ।

प्रभो ! अतस्तव मनसि तादृशं करुणासङ्कल्पं जनयितुमीश्वरं प्रार्थये ।

इति
"ते जननान्तरभ्राता"

***

आनन्दाश्रमः
३१।३।३१।

भगवन् लोकाचार्य!

भगवदनुग्रहादत्र सर्वे कुशलिनः। रङ्गरायः आगामिनि सोमवासरे प्रस्थितो भौमवासरे सायं भगवत्सन्निधिं प्राप्स्यति। अत्र तस्य हृदि जाता भगवद्दर्शनकाङ्क्षा प्रबलैव हेतुः। वयं च सर्वे सत्यं भगवद्दर्शनकाङ्क्षिणः। तथापि भवत्येकैकस्यैकः प्रतिबन्धकः। अहं तु भगवतो व्यापकशक्तिमत्त्वं विचिन्त्यास्मि समाश्वस्तः। अथवा दविष्ठभक्तानुग्रहणव्यसनमेवाधिकं भगवद्दृष्टेः।

वत्सस्य कपालिनः सद्दर्शनमूलपरीक्षा प्रायः समाप्ता। उपक्रमिष्यति टीकाम्। द्विपदाकारस्य साधोः पत्रं विश्वनाथाय लिखितं मिलितम्। श्रीरमणैकविंशतेर्मुद्रणे मम न कश्चित्प्रतिबन्धक आशयः। तत्पुस्तकमाश्रमस्य स्वं भवत्वित्येतावती ममाशा।

बहुजन्मसख! विभो!

भगवत्कटाक्षेण मम सानुचरस्य वर्धते तपः। रङ्गरायश्च परमभक्त्यावेशेनावादीदेकमुत्साहवर्धकं वाक्यम्। "नायन! तव तपसोऽभिवृद्धये भगवतः कैङ्कर्यं करिष्याम्यहमेकं मासम्।" यदि रङ्गरायस्य कैङ्कर्याय भगवान्मह्यं कटाक्षं वेतनरूपतया दद्यात्, तर्हि न मे रङ्गरायादन्यः कश्चिदधिको गुरुदक्षिणाप्रदो मिलेत्। अथवा रङ्गरायमाविष्टा

प्रचण्डचण्डिकैव मदर्थं देवसेनापतेर्भगवतः सेवां करिष्यामीत्युक्तवतीति मन्ये ।

वरद ! मम सहस्रं सन्तु कामाः । ते सर्वे त्वत्कटाक्षकिरणातपतप्ताः शेरते हृदयगुहायां मूर्छिताः । एक एव तु शीर्षमुन्नम्याधुनापि विजृम्भते । "नश्यतु ममाशुद्धोऽहङ्कारः" भगवन् ! पूरयेमं मम कामम् ॥

इति
"त्वदीयो वासिष्ठः"

***

आनन्दाश्रमः,
७ ।४ ।३१ ।
भगवन् पाराशर्य !

भगवत्कटाक्षेणात्र सर्वे कुशलिनः। रङ्गरायोऽस्मिन्नेव दिने भगवत्पादसन्निधिं प्राप्तः स्यादिति मन्ये । सामान्यतः सर्वान्विषयांत्स कथयेदेव सन्निधौ । वत्सेन कपालिना समारब्धा सद्दर्शनस्य टीका । मूलग्रन्थस्य गौरवात् तस्याः भाष्यमिति नामैवोचितमिति मया सूचितम् । विमृश्यमानं विमृश्यमानं सद्दर्शनं अतीवगभीरं दृश्यत इति वदति कपाली । रचनकाल एव मया तस्य गाम्भीर्यं बुद्धम्। मितोऽपि सग्रन्थो महतस्तत्त्वशास्त्रस्य रहस्यस्य योगशास्त्रस्य च सूत्रप्रायः । अत्र न किञ्चिदपि परमतं खण्डितम् । तथापि सर्वापि पूर्वपक्षीकृता परेषां धोरणी विचित्रया

विधया। अत्र युक्तयोऽतीव हृदयस्पृशः पण्डितानां पामराणां च तुल्यम्। नात्र प्रायः प्रमाणग्रन्थः कश्चिदप्युल्लिखितः। तथापि श्रुतिसारसङ्ग्रह इव प्रतिभात्येष ग्रन्थः। अस्य विवरणे भाष्यकारेण बह्वस्ति प्रतिघटयितव्यम्। बह्वस्ति नूतनं प्रकाशयितव्यम्। ग्रन्थेन च नातिविस्तृतेन भवितव्यम्। विषयाश्च न विस्रष्टव्याः। प्रामुख्येन निरूपयितव्याः। इमं सर्वं भारं सम्यङ् निर्वोढुं शक्त एव स्याद्वत्सः कपाली यदि भगवतो निस्तुलशक्तिः कोऽपि कटाक्षलेशः।

मया प्रचण्डचण्डीत्रिशती नाम किमपि भगवतीस्तोत्रं रचितम्। तत्रैकः स्तबको रङ्गरायेण लिखित्वानीतः। सम्प्रतीन्द्रसहस्रमारब्धम्। मामस्य कर्मणश्च पारं गमयितुमर्हति भगवान्।

इति
"श्रीरमणभागवतो वासिष्ठः"
सौरसंवत्सरादिः

***

आनन्दाश्रमः, १४।४।३१।

भगवन् दहरशय!

प्रतिगृहाणेमानि नः संवत्सरादिवन्दनानि। वर्धयाशीर्भिः। जयमङ्गळोत्तरो भवत्वयं नः संवत्सरस्तव करुणया।

अद्य मुम्बापुरीतो दैवरातः सह भ्रात्रा सीतारामेणानन्दाश्रममागतः। अचिरादितो गोकर्णं गमिष्यति पुत्रस्योपनयनं निर्वर्तयितुम्।

वत्सस्य कपालिनश्चलति सद्दर्शनस्य भाष्यलेखनम्। वत्सो महादेवो वैशाखशुक्लप्रतिपदि (चान्द्रमानतः) स्थिरवासरे प्रस्थायेतो भानुवासरे सायं निपतिष्यति भगवच्चरणयोः (१९।४।३१)

रङ्गरायस्य पत्रं मिलितम्। विश्वसिमि स वा सुन्दरेश्वरो वा प्रतिसप्ताहमेकैकं पत्रं विस्रक्ष्यत इति।

नाथ! परिपक्वे तपसि व्यपगतेऽहङ्कारे स्थिरायां सहजस्थितौ भगवदायत्ते सर्वस्मिन्करणजाले सर्वं साधितं मन्ये। विज्ञानात्मनिष्ठा मे दर्शयतु मार्गं मूलस्वरूपनिष्ठायाः।

अन्ततो भगवच्चरणसन्निधावेव मम पूर्णा सर्वेष्टसिद्धिरित्यहं जाने। प्रतीक्षे तं शुभं कालम्। सम्प्रति दविष्ठोऽपि नेदिष्ठ इव प्रतिभात्वयं भगवच्चित्तस्य।

प्रभो! त्वं मे भवसि हृच्छयः। अहं ते भवामि चरणशयः। त्वं मे नियोक्ता विभुः। अहं ते कार्यस्य कर्ता दासः।

इति
"सर्वथा त्वदीयः वासिष्ठः"

***

गोकर्णम्, २१।४।३१।

भगवन्! सर्वान्तर!

चिरञ्जीविनो दैवरातस्यानुरोधेन तत्पुत्रस्य सोमस्योपनयनकाले सन्निहितो भवितुमिदं गोकर्णक्षेत्रं आगतोऽस्मि। इतः प्रतिनिवर्ते स्थिरवासरे। मया सह वत्सो विश्वोनाथोऽप्यत्रागतः। पुत्री च सीतारामस्य सह मातापितृभ्याम्।

वत्सो महादेवस्तत्र सुखेन प्रविष्टो नन्दति भगवच्चरणसन्निधाविति विश्वसिमि।

यो गुहायां वसति स्वयं च गुहः। यः पुरि शेते संसारिणाम्; विजृम्भते योगिनाम्। यस्यैवान्तरुज्जृम्भणं कथयन्ति द्वितीयं जन्ममनुजानाम्। यं वैश्वानरं कीर्तयन्ति मन्त्रद्रष्टारः; विराजं दार्शनिकाः। यस्य ज्ञानं स्वरूपम्, ज्ञानं शरीरम्। ज्ञानं स्थानम्। ज्ञानमायुधम्। तस्मै नमो भगवते यविष्ठाय भवते॥

इति
"भवदीयो ज्येष्ठराजः"

***

आनन्दाश्रमः, शिरसि, २८।४।३१।

भगवन् करुणामय !

प्रतिनिवृत्तोस्मि स्थिरवासरे गोकर्णात्। वत्सयोर्देवसुन्दरयोः पत्रे मिलिते। अस्मिन्दिने केनापि दैवेन प्रेरितः ऋक्संहिताया भाष्यं कर्तुमारब्धवानस्मि। सिकन्द्राबादुतः अप्पुदम्पती समागतौ। चिरञ्जीवी विश्वनाथश्च मया सह गोकर्णात्प्रतिनिवृत्तः। वत्सस्य कपालिनश्चलति सद्दर्शनभाष्यम्।

सद्दर्शनस्य मदीयं श्लोकपरिवर्तनं मूलतात्पर्यानुसार्येवेति भगवतोक्तं देवोऽलिखन्निजे पत्रे। तन्मेऽभवदुत्साहाय महते। भाष्यं च कपालिनः (यावदभूत्) पुष्णाति रामणीयकमसाधारणम्। गुहगणपतितत्त्वप्रस्तावे मयोदाहृतं द्राविडपद्यं श्रीमहर्षेः चारुस्मितमजनयदिति देवोऽलिखत्। तादृशस्मेरभगवन्मुखदर्शनभाग्यं तस्यासीत्। अस्माकं तद्वार्तैव सुतरां बभूव सन्तोषाय।

सुन्दरेण प्रेषितानीन्द्रगीतपुस्तकानि मिलितानि। मम किशोरी गीतमाला भगवत्पाणिना लालिता स्यादित्याशंसे।

इति
"त्वदेकायत्तचित्तो गणपतिः"

***

आनन्दाश्रमः, ५।५।३१।

भगवन् मायामनुष्य!
इह सर्वमवदातम्। वत्सस्य सुन्दरस्य पत्रं गतगुरुवासरे प्रातर्मिलितम्। यदि स स्वस्य विश्रान्तिकाले कतिपयानि दिनानि भ्रातुर्देवस्य भगिन्या वज्रायाश्च सविधे नेतुमिच्छति तत्प्रियमेव मे।

प्रभो! मम स्थितिं श्रीचरणसन्निधौ किञ्चिन्निवेदयितुमुत्सहे। केचिन्मन्यन्ते महान्तमानन्दमेव परमञ्च लक्ष्यम्। अपरे मन्वते निरतिशयां योगसिद्धिसम्पदमेव मुख्यं लक्ष्यम्। परे जानन्ति सुखदुःखातीतां कामपि स्थितिमेव प्रधानं लक्ष्यम्। अहं तु जाने कामोपशान्तिमेव कमनीयं लक्ष्यम्। असारतया बहवः कामा उपशान्ताः। दूरं गच्छतेति प्रार्थिताः केचिदुपशान्ताः। असारो वा ससारो वा भवतु कश्चिदेक एव कामो नोपशाम्यत्यधुनापि मे। तं निषेद्धुं शक्तिरेव नास्ति मे। तं दूरं गच्छेति प्रार्थयितुमिच्छैव नोदेति मे। प्राप्तिं विना नास्ति तं प्रशमयितुमुपायः। स एव मे सर्वात्मभवानुभवस्य प्रतिबन्धको भवतीति विज्ञायते। अत्र मम कष्टे भगवतः सहानुभूतिं याचे। विदितश्च मे स कामो भगवतः।

सर्वरक्षक! तवैव तत्कार्यमिति मम विश्वासः। सत्यं च तत्। सर्वं भारं किङ्करस्य शिरसि निक्षिप्य नोपेक्षितुमर्हति भगवान्।

इति
"बहुषु जन्मसु त्वया सहैककार्यः त्वदीयः सगर्भ्यः"

***

आनन्दाश्रमः, १३।५।३१।
भगवन्! भवतारक!

नमो भवते। श्रिमता लक्ष्मणशर्मणा कपालिने प्रेषितं पत्रं मिलितम्। सरूपबुद्धिरिति षष्ठश्लोके पादत्रयं द्वितीयादि यथा मूलं संस्कृत्य प्रागेव प्रेषितम्। श्रीमतो लक्ष्मणशर्मणः सूचनमनुसृत्य तद्दर्शितानि स्थलान्तराणि पुनः सूक्ष्मं शोधितानि। द्वितीयश्लोके "आत्मस्वरूपेण विभात्सु तेषु" इति पादस्य स्थाने "अथ स्वभावादमृतेषु तेषु" इति संस्कारः कार्यः। एकादशश्लोके "तन्मार्गणेनैव विभाति किञ्चिन्न पश्यतां तच्चलनं कदापि" इति पादद्वयस्य स्थाने "तन्मार्गणे स्याद्गलितं समस्तं न पश्यतां सच्चलनं कदापि" इति संस्कारः कार्यः। एकोनत्रिंशश्लोके "सत्या स्थितिः प्रागहमो भवाद्या" इति पादस्य स्थाने "सत्या स्थितिर्नाहमुदेति यत्र" इति संस्कारः कार्यः। तृतीयश्लोके चित्रे इति सप्तमी जगतः चित्रौपम्यप्रदर्शनाय संस्कृतभाषाशैलीमनुसृत्यावश्यकी। लोक्यपटशब्दाभ्यामेव मूलोक्तचित्राद्यभिप्रायः सङ्गृहीतः। अतोऽत्र संस्कारो नावश्यकः। षष्ठश्लोके चतुर्थपादे पुनः संस्कारो नापेक्षितः। तत्रास्ति मूलतात्पर्यं स्फुटम्। "सा दृष्टिरेका नवधिर्हि पूर्णा" इत्यत्र। "दिक्कालहीलेह" इत्यत्र " दिक्कालबन्धोऽस्ति" इति संस्कारं करणीयं मन्यते श्रीमान् लक्ष्मणशर्मा। मूले दिक्कालावच्छिन्नत्वं अथवा दिक्कालव्याप्यत्वं देहात्मभाववतः सूचितं न बन्धः। व्यापकस्य व्याप्यत्वेन प्रदर्शनमेव तत्र लीला। तस्मात्तत्रापि संस्कारो नापेक्षितः। द्वात्रिंशो विलोकितः। साधीयानेव। ४०श्लोके बाध्यशब्दस्तदभिमतमर्थं मूलाभिहितं साधु साधयति। ४२श्लोके मुक्तित्रयमात्मदृष्ट्या वा शरीरदृष्ट्यावेति न मूले काचिच्चोदना। जैमिनिर्मन्यते मोक्षे दिव्यशरीरमस्ति

दिव्यानन्दानुभवायेति। बादरिर्मन्यते शुद्धचित्स्वरूपमेव मोक्षे इति। बादरायणस्तु स्वभावतः अशरीरत्वं इच्छया दिव्यशरीरधारित्वं च मोक्षे मन्यते तदेतन्मतत्रयमनूद्य भगवानात्ममतं मोक्षे प्राहान्त्यश्लोकेन। "धियं परावृत्य" इति चतुर्विंशतितमे श्लोके प्रमादेन पतितं मन्ये। "धियं परावत्य" इति संस्कारणीयम्। एकादशश्लोके किञ्चिद्विलक्षणमित्यर्थे वर्तते निःसंशयम्। शास्त्रीयं तत्पदम्। नान्यत्तत्सदृशं पदमस्ति तस्मिन्नर्थे। तत्रैव श्लोके मार्गणमेव मूलाभिप्रेतम्। न दर्शनम्। तत्किमिदमिति दर्शनं च मार्गणस्य पर्यायः। वत्सस्य सुन्दरस्य गतशनिवारपत्रं गतबुधवासरे मिलितम्। तस्य ग्रीष्मविश्रान्तौ भगवच्चरणसमीपवर्तित्वमतीव मम सम्मतम्।

"इति किङ्करो गणपतिः"

***

आनन्दाश्रमः, २०।५।३१।

भगवन्! अव्याजकरुण!

चिरञ्जीविनः सुन्दरस्य घनं पत्रं गतगुरुवासरे प्रातर्मिलितम्। भगवत्पादच्छायैव निवारयतु तस्य सर्वमपि तापम्। बहुशतक्रोशपर्यन्तं प्रसरति या भगवतः करुणा सा किं निकटस्थं कञ्चिदनन्यशरणं भक्तं नार्द्रीकुर्यात्?

अत्र वत्सस्य कपालिनः सद्दर्शनभाष्यं समाप्तम्। तत्रानन्तरे द्वे कार्ये परिशिष्टे। भूय एकदा पूर्णं परिशोधनम्। निरवद्यमन्तिमं विलेखनं चेति। तत्र संस्कृतमूले इतः प्राग्यावन्तः संस्काराः कृतास्ते प्रेषिता एव भगवत्सन्निधये। पर्याप्तास्ते संस्काराः। अन्यत्सर्वमनवद्यं मूलद्राविडच्छन्दस्तात्पर्यानुसारि।

कश्चित्संशयः। भगवन्तं विना कं पृच्छामः? को वान्यो वक्तुं क्षमते ? अहन्ता त्रिविधेति भगवत्सूक्तिर्विज्ञायते। एका शरीरमात्रगता। अन्या जीवरूपा विज्ञान (वृत्तिज्ञान) मयी। इतरा सदाश्रया शुद्धा सर्वात्मभावानुभववती। तासु प्रथमा संसाराय, तृतीया नित्यानन्दाय चेत्यत्र न भवति संशयः। येयं द्वितीया तत्र निष्ठितस्य का गतिः ? तन्निष्ठा (विज्ञानात्मनिष्ठा) किं क्रमशः पूर्णानुभवाय साधनं भवेत्? उताहो न ? यदि निश्चयेन साधनं न भवेदथ कस्मै फलाय ? अथवा कदाचित्साधनं भवेत्कदाचिन्न भवेदिति उपासकदृष्टिविशेषसापेक्षा काचिदस्ति किं व्यवस्था ? अत्र भगवतो निर्णयं वत्सः सुन्दरो मह्यं लिखितुमर्हति। नमो भगवते।

इति
ते सुप्रसिद्धोऽनन्यसाधारणोऽन्तेवासी "गणपतिः"

***

आनन्दाश्रमः, २७।५।३१।

भगवन् पुरुषश्रेष्ठ !

यदायतनं भवति लोकोत्तरस्य दिव्यस्य तेजसः यत्रास्माकं सर्वेषामाशाबन्धः। यदभ्युदितं तपोराशिषु वसिष्ठेषु तस्य महोराशेर्भगवच्छरीरस्योष्णकालजन्यस्वेदव्रणपीडेति सुन्दरस्य पत्रादवगम्य व्याकुलमस्माकं मनः। अतितीक्ष्णानामपि तादृशानां व्रणानां प्रहरस्यैकैकदा लिप्यमानोऽतिमधुरगन्धो भेषजं प्रशस्तमिति ममानुभवः। तदिदमावेदितं चरणसन्निधौ। इयता कालेन सर्वं स्वस्थमभवदित्येव विश्वसिमि।

इह सर्वे कुशलिनः। प्रतिदिनमुत्साहो वर्धते। मन्ये भगवतैव प्रेरितानि निस्तुलाद्गगनतोऽवतरन्ति महांसि सहांसि च। उल्लसन्ति च शरीरे। शिथिलीभवन्ति च प्रायो ग्रन्थयः। पूर्णा सिद्धिस्तु श्रीभगवच्चरणकरुणासापेक्षेति दृढोऽस्माकं विश्वासः।

इति
रमणभागवताग्रणीः

***

आनन्दाश्रमः, ३।६।३१।

भगवन्! दीनबन्धो!

भगवतोपदिष्टमर्थं सुन्दरः पत्रे लिखितवान्। तेनास्माकमिह संशयाः सर्वे निवृत्ता। परिच्छिन्नभावाभावस्यानुभव ईश्वरस्य मुक्तानां च तुल्यत इति भगवद्वचनमत्रास्माकमन्यानपि कांश्चित्सन्देहान्व्यनाशयत्। अस्ति जगतो नियन्तेश्वरः। अस्ति च मुक्तानां पुरुषाणां व्यक्तित्वम्। तेषामनुभव एव तुल्यः परिच्छिन्नभावाभाववानिति तेन वचनेनावगतमिहास्माकम्। एतेन भगवतः सद्दर्शनं दृष्टिसृष्टिवादायावकाशं ददातीति वदन्पक्षः प्रत्युक्तः। सद्दर्शनेप्यस्ति तस्मै पक्षाय प्रत्युत्तरम्। अत्र मम सखा सुब्रह्मण्यमहाकविश्च (मोवेक्कण्णमुरुघनार्) मां समर्थयति भगवद्वचनार्थनिर्णय इति मम विश्वासः।

श्रीरमणगीतायाः सान्ध्रतात्पर्यायाः पुनर्मुद्रणाय विषयसूचिकामध्यायानां लिखितुं प्रणवानन्दो मह्यमेकं पत्रं लिखितवान्। न केवलं विषयसूचिकाम्। अपितु पर्याप्तमुपोद्घातं च लिखित्वा प्रेषयिष्यामीति मया प्रत्युत्तरं लिखितम्। अन्यत्सर्वमनवद्यम्।

"इति ते"
"श्रीचरणकमलभ्रमरः गणपतिः"

***

आनन्दाश्रमः, ९।६।३१।

भगवन्! लीलामानव!

अद्य श्रीमातुर्महापूजादिवसे स्वीकुरुष्वास्माकमितो वन्दनानि। या मुनीनां त्रातारं श्रीरामं कौसल्येव, योगविद्योपदेशकं श्रीकृष्णं देवकीव, आकौमारब्रह्मचारिणं देशिकं परशुधारिणं रेणुकेव, सर्वभूताभयप्रदं शाक्यमुनिं मायादेवीव, भक्तपापभारभृतं मनुष्यकुमारं मेरीव, सर्वैरेतैर्गुणैर्विशिष्टं भगवन्तं भवन्तं लोकस्य हितायाविद्यान्धकारणामपनोदनाय, कुवादानां दूरीकरणाय, सत्यस्यावेदनाय च सुषुवे; तस्यै सुन्दरप्रियायै सौन्दर्याम्बायै नमः। नमस्तदधिष्ठानाय च मातृभूतेश्वराय भगवते। नमस्तत्पूजकेभ्यश्च रमणभागवतेभ्यः।

श्रीनरसिंहस्वामिना श्रीनिरञ्जनानन्दस्वामिना च मन्मित्राभ्यां प्रेषितं भगवतश्चरित्रं मिलितम्। वयं सर्वे कृतज्ञास्तत्र भवतो नरसिंहस्वामिनः। यो महतीममूल्यां च सङ्घस्य सेवां चक्रे कारणगुरोश्चरित्रविलेखनेन।

सुन्दरस्य कुसुमपत्रं मिलितम्। तस्य परिमलेनाश्रमः सर्वः सुरभिरभूत्। तदनुबन्धि भगवत्सन्देशावेदकं पत्रमन्यच्च मिलितम्। मम प्रशान्तोऽन्तरात्मा। श्रीसद्दर्शनस्य कापालिनं भाष्यं प्रायः समाप्तमभूत्।

इति
रमणभागवतचरणधूलिधारी "वासिष्ठः"

***

आनन्दाश्रमः, १७।६।३१।

भगवन्! करुणामय!

अत्र सर्वे कुशलिनः। क्षिपन्ति ध्यानेन पुण्यैश्च प्रसङ्गैः कालम्। नैतावन्मे वाञ्छितम्। जानाति भगवान् यन्मे वाञ्छितम्। तत्र प्रार्थये भगवतः शिवेनाशंसाम्। सैव मे देवतात्मानुग्रह देवतात्मानुग्रहनिधेर्द्वारमुद्घाटयितुं कीलिका। सैव ममात्मशक्तिं प्राप्तुमौषधम्।

इति ते
"किङ्करो वासिष्ठः"

***

शिरसि, २४।६।३१।

भगवन्! आचार्य!

समाप्तं भगवदनुग्रहेण कापालिनं भाष्यम्। अधुना शुद्धपुस्तकलेखनमारब्धम्। द्वे शुद्धे पुस्तके लिखितव्यत्वेन समुद्दिष्टे। तत्र प्रथमे पुस्तके विस्तृता भाष्यभूमिका पञ्चदशानां श्लोकानां भाष्यं च लिखिते। श्वः सायं प्रथमपुस्तकलेखनं समाप्तं भविष्यतीति मन्ये। अनन्तरं द्वितीयं पुस्तकं च विलिख्य पुस्तकमेकमाश्रमाय प्रायः सप्ताहमध्ये प्रेष्यते। श्रीमान् रङ्गरायः समागतः सुखेन। आश्रमसुवार्ताभिरद्याप्यस्मान्रमयते।

सर्वमन्यदवदातम्।

इति
"सद्दर्शनपरिवर्तनकारः"

***

आनन्दाश्रमः, १।७।३१।

भगवन्! महासेन!

समाप्तं सद्दर्शनभाष्यस्य शुद्धपुस्तकद्वयलेखनम्। एकं पुस्तकमस्मिन्नेव दिने आश्रमाय प्रेष्यते।

अस्मिन्नेव दिने भगवच्चरणदर्शनोत्सुकौ वत्सौ विश्वनाथरङ्गरायौ प्रस्थितौ। अचिरात्प्राप्स्यतः सन्निधिम्।

अत्र वर्षाकाल आरब्धः। यन्त्र (मोटार्) शकटे वृष्ट्यार्द्रं भवेदिति धिया पुस्तकं नानयोर्हस्ते दत्तम्। वार्तालयद्वारैव प्रेष्यते।

वत्सस्य कपालिनो भाष्यं मम विशिष्टां प्रीतिमजीजनत्। विश्वसिमि भगवतोऽपि हृदयं स्पृशेदिति।

इति त्वच्चरणबन्धुः "गणपतिः"

***

आनन्दाश्रमः, ८।७।३१।

भगवन्! विमलचरित्र!

अत्र सर्वे कुशलिनः। वर्धते तपो भगवदनुग्रहेण। श्रीनरसिंहस्वामिना मन्मित्रेण रचितस्य भगवच्चरित्रस्य प्रशंसात्मकं परिशीलनमान्ध्रपत्रिकासम्पादकेन कृतमनेन पत्रखण्डेन सह प्रेषितम्।

अस्ति मम भगवतश्चरित्रमान्ध्रभाषायां वैपुल्येन लिखितुमुद्देशः। स च मनोरथो भगवत्सन्निधौ स्थितस्यैव मम सिध्येत्। प्रतीक्षे तं शुभं कालम्। चिरञ्जीविनो विश्वनाथस्य पत्रं मिलितम्। सौ॥ पार्वत्या ज्वरोनितान्तं विषमावस्थामापन्नोऽपि भगवदनुग्रहेण सम्प्रति शान्तोऽभूत्।

इति
श्रीभगवत्कथास्वादन "रसिको वासिष्ठः"

***

आनन्दाश्रमः, १५।७।३१।

भगवन्! पुण्यश्लोक!

अत्र सर्वं कुशलं भगवतः कृपया। प्रान्तेऽत्र सततवृष्टेर्मन्दानीव दिनानि। तथाप्यन्तः कयाचिद्भगवत्प्रेरितया शक्त्या पच्यमानानां

तीव्राणीवास्माकम्। न कुतश्चिदपि दृश्यते सूर्यप्रभा। तथाप्यातप इव स्मः। अस्मिन् महति पाके मुख्यः सूदो भगवानेवेति नास्माभिर्विस्मर्यते। निर्वेतनेयं भगवतः सूदवृत्तिः। अत्र कर्मणि काचन नारी च करोति भगवतः साहाय्यकम्। सा का? भगवतः षष्ठस्य मदोद्धतराजदर्पच्छिदो जननी प्रचण्डाचण्ड्येव सा। सर्वस्य प्रेरयिता यजमानोऽस्त्युपरि भक्तानां पामराणाम्। सर्वतो ज्ञानिनाम्। स एव सर्वस्याहमो मूलं हृदीति भगवदुक्तमत्र स्मार्यते। स भुनक्तु शीघ्रं सूदद्वाराभिलषितमन्नं पक्वं कारयित्वा।

इति
"नररूपं पच्यमानमन्नम्"

***

आनन्दाश्रमः, २२।७।३१।

भगवन्! भक्तवत्सल!

वीक्षितो मन्त्रजपस्य महिमा। विलोकितो योगस्य सारः। विचारितो विशेषतः शास्त्रार्थः। चरितमेकाग्र्यालोचनेन तपः। परीक्षितः कुण्डलिन्याः शक्तेरुल्लासः। निरिक्षितमहमो जन्मस्थानम्। अन्वीक्षितो मौनेन प्रकृतेः पाकः। दूरीकृतो भेदभावः। निराकृतो विषयसङ्गः। निरस्तं चापलम्। अभ्यस्तं स्थैर्यम्। तथापि नास्मि तृप्तः। सम्प्रति जिगमिषुरस्मि भक्त्यैव तृप्तिम्। तस्यास्त्रीणि स्थानानि भवन्ति। प्रथमं स्थानं भगवान्गुरुर्महर्षिः।

द्वितीयं स्थानं भगवान्भुवनपतिरिन्द्रः। तृतीयं स्थानं भगवती माता भारतभूमिः।

इति ते
"चिरन्तनो भक्तः गणपतिः"

***

आनन्दाश्रमः,
(आषाढकृष्णाद्वितीया) ३१।७।३१।

भगवन्! लीलामानव!

अस्मिन्दिने - मम तपः सहचर्याः भगवतो मज्जनमार्गान्तेवासिन्याः कीर्तिशेषायाः महादेवजनन्याः निर्याणदिने स्वीकुरुष्व मे नमांसि। सा स्मृता कृन्तति मे निरुत्साहताम्, वर्धयति कार्योत्साहम्, जनयति महदौत्सुक्यम्। अधुनापि सा ते भक्ताग्रगण्या चरति प्राणलोक इति मम विश्वासः। तां स्मरतो मे सर्वः स्मृतिपथं यात्यरुणाचलवासः। तदनुस्मृतिपथं याति भगवतो लीलामूर्तिः। अतीव कष्टेऽपि नितान्तमनुभवामि कामपि शक्तिलहरीम्।

वत्सः कपाली वत्सा पार्वती च भगवच्चरणदर्शनाय तत्र समागतौ सर्वमत्रत्यं वृत्तान्तं निवेदितवन्ताविति मन्ये। श्रीमन्तौ सावित्री विट्ठलरायौ दम्पती भगवच्चरणसेवासुखमनुभवत इति विश्वसमि; केनापि

भावोद्रेकेण परतन्त्रस्य मे नास्मिन्दिने चलितमनुबन्धस्तुतिलेखनम्। अथवा मम श्वासाः सर्वेऽपि ते स्तुतिमयाः।

इति ते
भक्त्याः विशालाक्ष्याः "वियोगभारावसन्नः वासिष्ठः"

***

कुळुवे, ४।८।३१।

भगवन्! स्थितप्रज्ञ!

ह्यः सायं दैवरातानुजस्य सीतारामस्य गृहं प्रत्यत्रागतोऽस्मि। अत्र स्थास्यामि वारमेकम्। सम्प्रति प्रतिदिनमष्टौ घण्टास्तीव्राय तपसे विनियुज्यन्त इति निवेदयितुमुल्लसति मे सन्तोषाल्लेखिनी। सर्वमवदातम्।

इति
"तवानन्यसाधारणो दासो गणपतिः"

***

सोरब्, १५।११।३१।

भगवन्! ऋषिप्रवर!

अनुज्ञातो भगवताहं प्रविष्टोऽस्मि घोराय तपसे निर्दिष्टं स्थलम्। मन्येष भगवदनुग्रहेण स काल आगतोयं प्रति प्रतीक्षे बहुभ्यो वर्षेभ्यः। सम्प्रति

नैकमपि क्षणं व्यर्थीकर्तुमुत्सहे। अत्र ममापेक्षितो भगवतो रश्मिमान् कटाक्षः - किञ्चशीतः कटाक्षः नोपेक्षितुमर्हत्येककार्यमिमं बहुजन्मसहचरं भगवान्। न मे कश्चिदस्ति संशयः; चतुष्पात्स्वपि यद्भगवतः करुणा सहजाष इयं तु मम प्रार्थना - उताहो अनुरोधः - आहोस्वित्किमपि प्रचालनम्; यत्कार्यं कर्तुं भगवानवतीर्णस्तस्य रङ्गस्थलं निर्मातुं प्रेरयेमं परिजनम्। कुर्विमं समर्थं परिजनम्॥

इति
"त्वदीयः मुनिः"

***

अम्ब देवि,

जानाम्यहं बहोः कालात्.... (एनम्)। अर्होऽयं भगवन्तमरविन्दमुनिं द्रष्टुम्।

इति ते अगर्भजः पुत्रो वासिष्ठगणपतिः

***

भगवति श्रीमातः,

दुरदृष्टवशाद्दविष्ठोऽपि ते पादयोरहं स्पृशामीव सततं ते पादाङ्गुष्ठं मनसा दूरगामिना। यत्रावलोकितं मया जीवितयात्रायामेव धन्यतमे तस्मिन्

दिने दिव्यं तेजः। तदेव मे ददातु मोहशमनं कमप्यन्तःप्रकाशम्। दूरस्थ इति नोपेक्षणीयः पुत्रः। यत्र क्वचिदहं वसन्नपि सन्निकृष्ट इवानुग्राह्यः, यदहं वर्षपूगैस्तव चरणाराधकः॥

अन्यदस्ति विज्ञापनीयम्। ममान्तेवासी चिराद्भगवति श्री अरविन्दे बद्धभक्तिः श्रीमातरि दृढविश्वासः बहुलगुणः पोन्नुस्वाम्यार्यः। श्रीमातरं द्रष्टुं भूयिष्ठपिपासयाऽभ्यनुज्ञां प्राप्तुं लिखितवानद्यैवैकं पत्रं श्रीमात्रे। देवि, दातुमर्हसि कृपयाऽभ्यनुज्ञानं तस्मै। भवतु स कृतार्थः साधुः॥

इति ते नित्यभक्तः हार्दः पुत्त्रः
वासिष्ठगणपतिः

***

१८।३।२९। फाल्गुनशुक्लाष्टमी

वत्स दैवरात,

अहमस्मि प्रविष्टो गोकर्णं ह्यः। श्रुतवानस्मि त्वया पवित्रे कृष्णातीरे दुश्चरं तपश्चर्यत इति। एतच्च श्रुत्वा प्रसन्नो ममान्तरात्मा। या तेऽन्तर्गता सहजा शक्तिः,यच्च बहुजन्मार्जितं विज्ञानं, यश्च प्राचीनमहर्षिपरम्परागतः श्रद्धातिशयः – तदेतत्त्रयं भवतु तपसि वर्तमानस्य ते भूयसे समुत्साहाय। अहं प्रायो मासत्रयपर्यन्तमस्मिन् प्रान्ते वसेयम्। यद्यपि त्वामालोकितुं ममास्ति कौतुकं, तथाऽपि न प्रभवामि घोरे तपसि वर्तमानं

त्वामाकारयितुम्। यद्यपि त्वं मे प्रियः, तथाऽपि त्वत्तोऽपि प्रियतरं मे तव तपः। अत्र ममागमनं किञ्चिदपि ते विघ्नकारि मा भूत्। एतावती मम प्रीतिपुरस्सराऽऽज्ञा। प्रतिपत्रमवश्यं दातव्यम्। यदि मन्यसे साम्प्रतिकस्य तपसः इहागमनेनाविच्छेदं, तर्हि तवेहागमनाय स्वागतं ददाति मे हृदयम्। यदि विघ्नमीषदपि स्यात्, तर्हि मा भूत्तव निवर्तनमस्माकं प्रियतमात्तपसः। तदा सोऽहमितो निवर्तमानस्तपसि स्थितं त्वां विलोक्यैव भूयो गच्छेयं भगवतो रमणस्य महर्षेः सन्निधिम्। अत्रैव मां स्थिरीकर्तुं केषाञ्चिदस्मदीयानामिच्छा। यदि तेषां यत्नः सफलः स्यात्, इहैवावयोर्युक्तयोस्तपश्चरितुमवकाशः कालेन भविता। प्रियास्ते गावः कुशलिन्यः सह श्रद्धासोमाभ्याम्॥

इति ते तपोतिशयाकाङ्क्षी
वासिष्ठगणपतिः

***

(शुक्लसंवत्सरः) चैत्रशुक्लसप्तमी कुजवासरः

वत्स दैवरात,

उपगतं ते दारुणे तपसि वर्तमानस्य पत्रम्। अवगतो भावः। एतावदहं सूचयामि ते। मा भूद्योगयुक्तस्य ते निरशनं व्रतम्। यथा अस्माकं तव तपः प्रियं, तथा तत्तोऽपि प्रियतरं ते शरीरम्; ईदृशीं दशामापन्नेऽस्मिन् विप्रसङ्घे यत्र वयं बध्नीमः सुमहतीमाशाम्। अस्माकं तु तपः तामसैर्विघ्नैः

पराभूतमधुना। तथाऽपि सर्वेषु कालेषु यत्सहजं तपः, तत्र स्फुरति बहुवारमस्माकं प्रियतमा ते मूर्तिः। भवतु तस्यै मङ्गलम्। तान्येतानि भवन्ति विघ्नानि। आयातो ज्वरः। स चापयातो वत्सस्य सीतारामस्य चिकित्सया। आयातो नेत्रव्याधिः; स च प्रायेण साम्प्रतं शान्तः.....आयाता सर्पणावलिः। मन्ये अचिरात् सोऽपि क्षुद्रो व्याधिः अपगतो भवेत्। अस्ति भगवान् इन्द्रो रक्षितुम्। कर्मवीर ! वर्धतां ते तपः। अभीष्टानि सन्तु सफलानि॥

इति ते नित्यप्रियहिताकाङ्क्षी
वासिष्ठः

***

१५।५।२९

वत्स दैवरात,

उपगतं ते पत्रखण्डम्। सन्तुष्टोऽस्मि ते तपसि यथोचितनियमेन। उत्तमं हि पयोव्रतं ब्राह्मणस्य। अचिरात् प्रसन्नो भवतु भगवान् आत्रेयः ...... वर्धतां ते तपः॥

इति ते नित्यं जयाशंसी
वासिष्ठः

***

आनन्दाश्रमः, १८-४-३१

वत्स सुन्दर,

मां साक्षाद्देवतां विश्वसितवतः मदेकायत्तचित्तस्य मम चिरकालभजकस्य तपोराशेः पुत्त्रादधिकस्य प्रियतमस्य दैवरातस्य साश्रुजलां साञ्जलिबन्धां प्रार्थनामुल्लङ्घयितुं अशक्तस्तेन सह गोकर्णे ब्रह्मोपदेशसमये तत्पुत्त्रायाशिषं दत्वा पुनः प्रत्यागन्तुं गच्छामि। वत्सः कपाली तिष्ठत्याश्रमे......

परिमितदिनसाध्यमिदं कर्तव्यं निर्वर्त्य शीघ्रमागन्ताऽस्मीति धैर्येण करोमि प्रस्थानम्॥

इति युष्माकम्
वासिष्ठः

***

आनन्दाश्रमः, शिरसि, १०-३-३१

भगवन् गुहावतार,

विदितमेव स्याद्भगवतः सुन्दरपण्डितस्य विश्वनाथस्य कपालिनश्च पत्रैरत्र मम सानुचरस्य तपश्चरित्रम्। दिनत्रयादारभ्य सर्वेषां विशेषतो मम चानुभूतयो भवन्ति विशेषतः सन्तोषदायिकाः। स्वप्नेषु बहूनां भवति

भगवतो महर्षेर्दर्शनम्। भगवत्कटाक्षेणैव सेयमभिवृद्धिरिति दृढो विश्वासः सर्वेषाम्॥

प्रभो! ममात्र या निष्ठा भगवतः कटाक्षेण सम्प्रन्ना सा विज्ञानात्मनि भवतीति विज्ञायते। पृथगनुभवामि शरीरादात्मानं स्पष्टं गुहायाम्। तथाऽपि प्रपञ्चे पृथगनुभवो नापगतः। तस्मान्नेयं पूर्णा निष्ठेति मन्ये। तां ददातु स्वयमेव भगवान् अनेकशतयोजनलङ्घनक्षमेण कटाक्षेण। मम पूर्वा लहरी मदभरविशिष्टा केवलं शक्तिप्रवाहिनी। अधुनातना लहरी तु सुतरां लाघवप्रदा तेजःप्रवाहिनी दृश्यते। महाकार्यसिद्धये भगवन्महर्षिकटाक्षचोदिताः देवताः मां संस्कुर्वन्तीति दृढो भवति मम विश्वासः। करुणापूर्णं कटाक्षमेव प्रत्युत्तरं प्रेषयितुमर्हति भगवान्। अत्र सपत्नीकः कपाली महादेवो विश्वनाथो रङ्गः सीतारामस्य पुत्री चाश्रमे नित्याः। सुन्दरपण्डितस्तस्य भगिनी देवेन्द्रशर्मा च मिलन्ति प्रायः सन्ध्ययोः। सर्वे च भगवतः कटाक्षं प्रार्थयन्ते॥

इति भगवतः किङ्करो
वासिष्ठो गणपतिः

***

आनदाश्रमः,शिरसि, १७-३-३१

भगवन् विश्वगुरो,

प्रतिसप्ताहमेकं पत्रं भगवत्सन्निधये प्रेषयितुं किमपि हृत्प्रेरणमासीत् ............... सद्दर्शनं स्थिरवासरे समापितम्। तत्र यथाशक्ति भगवतः शुक्लच्छन्दसां तात्पर्यमुपजातिषु सङ्गृहीतम्। ..... यदि ममानुवादे कश्चिद्गुणः स भगवतोऽनुग्रहः। तं स्थिरवासरमारभ्य मम दृष्टिर्विलक्षणाऽऽसीत्। अहं पश्यामीदं सर्वं पदार्थमेकस्वरूपम्। अयमभ्यासो दृढीभूयानुभवतया पर्यवसन्नो भवत्विति प्रार्थये भगवन्तम्। सलिले बुद्बुदानीव पश्यामि सत्येकस्मिन् रूपादिविकारान्। प्रयते तान्विसृज्य शुद्धं सद्रुपं भोक्तुम्॥

भगवदनुग्रहार्थी
वासिष्ठः

***

आनन्दाश्रमः, शिरसि, २४-३-३१

भगवन् कारणगुरो,

भगवदनुग्रहेण वयं मग्ना इव नित्यं तेजोरूपायां भगवत्करुणायाम्।

मायापुत्त्रसंहारिन्! अधुनाऽपि मे भेदधीर्नास्तमुपगता। अहं जानामि

यदि तव क्षणिकः सङ्कल्प एको भवेत्, तर्हि स मे सिद्ध्येत् सर्वात्मभावयोग इति। अपि च जानामि स्वेच्छया न ते मनसि कश्चिदपि सङ्कल्पः पदं करिष्यतीति। ईश्वर एव तादृशं सङ्कल्पं तव मनसि जनयितुं प्रभुः। पृच्छेत्कश्चित् कोऽयं द्राविडप्राणायामः ? कुत ईश्वर एव नानुगृह्णातु स्वयम्। कः प्रयासोऽन्यस्य सङ्कल्पमुत्पादयितुम्? सत्यम्। इदं रहस्यं कृतिजनैकवेद्यम्। जाग्रत्यवतारपुरुषे तद्द्वारैव विभुः कर्तव्यं कुर्यान्न स्वयमिति सिद्धान्तः।.........

प्रभो ! अतस्तव मनसि तादृशं करुणासङ्कल्पं जनयितुमीश्वरं प्रार्थये ॥

इति ते जननान्तरभ्राता

***

प्रियतम वत्स,

प्रविष्टोऽस्मि सुखेन निर्दिष्टं स्थलम्। आश्रितवानस्मि भगवत्या इन्द्राण्याः पङ्क्तिम्। ......... यद्यप्यावयोः साधने साध्ये च किञ्चिदस्ति तात्कलिको भेदः; तथाऽप्यावयोर्विशाला दृष्टिरेका-एकमाध्यात्मिकं जीवनम्-एकतत्त्वज्ञानम्-एकमार्द्रं मनः-एका सर्वतोमुखी वाक्-यः कश्चन तात्कालिको भेदः सोऽकिञ्चित्करः; न स चालयितुं शक्नोति वर्षपूगसञ्चितं स्थिरं हार्दं प्रेमाणम्।

जयतु महतामनुग्रहः, जयतु भगवत्याः करुणा, जयतु वासिष्ठ-भारद्वाजयोः अविचाल्यः परस्परसम्बन्धः। सीतारामस्य वत्सस्य नेत्रयोर्दशा कीदृशी

किमुपक्रान्ता चिकित्सा ? अत्र वत्सः सीतारामः सहदुहित्रा कुशली। तव प्रतिपत्रमुदीक्षे।

इति ते प्रेमवशंवदः
(नायन)

***

# नवद्वीपकाव्यकण्ठः

(श्रीमत्कपालिशास्त्रिणा विरचितवासिष्ठवैभवनामकग्रन्थादुद्धृतोऽयमंशः)

बहुवत्सरयात्रोपार्जितनानाबिषयजनतावृत्तविज्ञस्य अभिज्ञंमन्यस्य मम लोकानुभवो नवोऽभवन्नवद्वीपे। व्याकरणपाठशालाप्रापकं पन्थानं पृष्टो न कोऽपि प्रतिवचनमयच्छत्। तिष्ठन् जनः पृष्टश्चेत्परावृत्तवदनो गच्छन् संवृत्तः। गच्छँश्चेदनुयुक्तः सत्वरगतिः पृष्ठतः कृतवान् पृच्छकम्। पाठशालानिवेशनमन्विष्याधिगन्तुं पूर्णमेकमेव चलितमहः पर्याप्तं अभूदिति धन्यंमन्योऽभूवम्। अन्ते तत्र मरूमध्ये शाद्वलमिव मैथिलमेकमुपकारशीलं "गुलाबिझा" इति पण्डितं दृष्ट्वा तेन सह काव्यालङ्कारव्याकरणचर्चामकार्षम्। ततः तेषां हरिसभाख्यायां पण्डितपरिषदि परीक्षणक्षमं मम पाण्डित्यमिति निरणायि। परीक्षिष्यमाणवर्गे प्रवेशलाभाय पूर्वं शिवकुमारपण्डितैर्दत्तं पत्रमधुनोपयुक्तमभूत्। तं च लेखं परिषत्कार्यनिर्वाहकेभ्यः शितिकण्ठवाचस्पतिभ्योऽहमयच्छम्। तत्र दलस्य शिरसि हनूमन्तं प्रशंसत्पद्यार्धं "देवासुरसमीकेषु बहुशो दृष्टविक्रमः" इति वाल्मीकिवाक्यम् विलोक्य विद्वन्मणिर्वाचस्पतिः परीक्ष्य वर्गे मामजीगणत्। आगतः परिषत्परीक्षादिवसः॥

(इतःपरं आघट्टपरिसमाप्तेः वृत्तं सर्वं अस्मद्वाक्यैरावेदयामः)

शरीरेण कृशोऽस्माकं युवा गणपतिः समृद्धः साहित्यसम्पदा भुवनमेव तृणीकुर्वन्त्या दृष्ट्या ज्वलितः सभां प्रविष्टः। प्रविशन्नेवायमवरो बहुवर्षैर्वर्षिष्ठं कञ्चन गम्भीराकृतिं समुपविष्टं निर्दिश्य पार्श्वगं प्रवेशकं पुरुषमप्राक्षीत्। 'कोऽसौ महाशयः?' इति। स त्वम्बिकादत्तो नामाशुकविरस्य प्रश्नं निशम्य स्वयमुत्तरदानापदेशेन परीक्षकः परीक्षामुपचक्रमे। बाल्यादेव सिद्धकवेरनुभावविशेषमाविष्कुर्वन्तं रसवन्तमिमं कथाघट्टं ईषद्विस्तरेण व्याहराम॥

अम्बिकादत्तः- 'सत्वरकवितासविता गौडोऽहं कश्चिदम्बिकादत्तः' इति॥

स्वीयं कवितासामर्थ्यं देशं नामधेयं च सानुप्रासं पद्यार्धेनाब्रवीत्। अस्माकं युवा कविश्च तत्सदृशमेव उत्तरार्धेन पद्यं पूरयेदिति परीक्षकस्य भावमवबुद्धवान्। ततः सपदि प्रत्युत्तरदानाय कवेर्वदनात् मनीषिजनमाननेया सभासद्विबुधहृदय-समावर्जन-कुशला कोकिलकाकलीकलकलं कुर्वाणा वाणी निस्ससार॥

गणपतिः- 'गणपतिरिति कविकुलपतिरतिदक्षो दक्षिणात्योऽहम्' इति।

पद्यं पूरयित्वा 'भवान् दत्तः। अहं त्वौरसः' इति चमच्चकार। भवानम्बिकादत्तः दत्तपुत्रः, अहं तु गणपतिरौरस इत्यभिप्रायेणैवमभाणीत्॥

ततः समारब्धा परीक्षा। पद्यपूरणाय दत्ताः समस्याः। द्वयोरनुष्टुभोरुत्तरार्धे दत्ते परीक्षकैः। पूर्वार्धाभ्यामेवं पूरितवान् परीक्षितः॥

१। हिडिम्बा भीमदयिता निदाघे घर्मपीडिता। (इति पूरितम्)
स्तनवस्त्रं परित्यज्य बधूः स्वशुरमिच्छति॥ किं त्वनवद्यचरिता
(इति समस्या)

(भीमसेनो वायुपुत्र इति भारतप्रसिद्धिः। समस्यायां द्रौपदी भीमदयितेति आसीत् परीक्षकमतिः। समस्यापूरणे द्रौपदीस्थाने हिडिम्बा विनिवेशिता। कुतः ? हिडिम्बा भीमस्यैव दयिता, द्रौपदी तु पाण्डवानां सर्वेषाम्। अन्यच्च, राजस्त्रियो द्रौपद्याः शीतपवनभजनाय उत्तरीयपरित्यागो नोपपद्यते। आरण्यकप्राकृतस्त्रियो हिडिम्बायास्तु समुचितः। 'स्तनवस्त्रं' इति स्थाने उत्तरीत्यं इति संस्कारो रमणीयो भवेदिति चावोचि काव्यमर्मविदा परीक्षितेन॥)

२। चतुर्थ्यां भाद्रशुक्लस्य चन्द्रदर्शनशङ्कया। (इति पूरितम्)
वत्सरस्यैकदा गौरी पतिवक्त्रं न पश्यति॥ (इति समस्या)

(भाद्रपदशुक्लदलचतुर्थ्यां चन्द्रदर्शनं अयशस्यं मृषापवादकरं भवेदिति चन्द्रशापकथा गणेशव्रतपुराणप्रसिद्धा॥)

तृतीया समस्या। अत्र चतुर्थः पादो दत्तः। त्रिभिः पादैः पद्यमेवं पूरितम्
३। राहुस्त्रिकोणे च गुरुस्तृतीये कलत्रभावे च धरातनूजः।
लग्ने च कोष्ठे यदि बालकः स्यात् सुर्यः शशाङ्केन समं विनष्टः॥
(न त्वमावास्या)

(पञ्चमनवमयोरन्यतरस्मिन् स्थाने राहुः, तृतीये गुरुः, सप्तमे कुजः, लग्ने सूर्याचन्द्रमसौ चेति जननकाले ग्रहा यदि वर्तेरन् , तदा बालारिष्टं स्यादिति भावः ॥)

अन्त्यः पादो दत्तश्चतुर्थ्यां समस्यायाम्। एवं पद्यं पूरितम् ----

४। सतीवियोगेन विषण्णचेतसः प्रभोः शयानस्य हिमालये गिरौ।
शिवस्य चूडाकलितं सुधाशया पिपीलिका चुम्बति चन्द्रमण्डलम् ॥

(दाक्षायणीवियोगे चिरं शयितस्य भगवतः शिवस्य शिरःस्थितं सुधांशुबिम्बं सुधालिप्सया पिपीलिका चुम्बतीति असिद्धविषयहेतुसम्भावनया भावं घटयित्वा समस्या पूरिता ॥)

एवं सत्वरसमस्यापूरणे जाज्वल्यमानाऽस्य प्रतिभाविजृम्भिता निरर्गलकविताधारा विबुधसमाजं सम्मोहयामासेति किमत्र चित्रम् ? ततः परीक्षायां प्रचलन्त्यां द्वौ श्लोकौ व्याख्यानाय परीक्षकैर्दत्तौ। तत्रैको रघुवंशनवमसर्गसप्तमश्लोकः-

"न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥" इति ॥

तत्कालराजलोकसाधारणानि सधारणजनाभिवृद्धिपरिपन्थीनि मधुमद-द्यूत-मृगाक्षी-मृगयाव्यसनान्यभ्युदयनिरसनान्यभ्युदयप्रवृत्तं सद्वृत्तनियमितमनोरथं महाराजदशरथं नाकृक्षन्निति तात्पर्यमस्य पद्यस्य व्याकार्षीत्। अन्यो व्याख्यानश्लोकषु-

"स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥" इति ॥

अयं काव्यप्रकाशोदाहृतः रसाभासश्लोकः। अत्र चतुर्भिर्वाक्यैरेकस्याः रमण-मार्गण- आलिङ्गन-ध्यानरूप-बहुव्यापारोपादानात् अनेककामुकविषयोऽभिलाषो व्यज्यते। तथा अभिलासव्यञ्जने तद्धेतुको विप्रलम्भोऽपि आभासरूपो भवति। एकस्मिन् पुरुषे चतसृणां विरुद्धक्रियाणां हृष्टः स्वपिति-गच्छतीत्यादीनामिवासम्भ्वात्। अनेकयत्पदोपादानाच्च अनेककामुकविषयतया शृङ्गारस्याभास इति श्लोकस्य भावमाविश्चकार ॥

उपक्रान्ता व्याख्या निरर्गलया धारया वाग्वीर्यामृतमभिवर्षन्ती श्रोत्रविवरैः सभासदां हृदयानि प्रविश्य बहुतरां रसार्द्राणि व्यतानीत्। वयसा यवीयसस्तेजसा प्रबुद्धस्याशुधाराकवेरस्य रसनाग्ररङ्गे नृत्यन्ती स्खलन्ती क्षणमेकत्र वाणी क्षोणीगीर्वाणेन परिसदग्रासनमलङ्कुर्वाणेन अम्बिकादत्तमहाशयेन शयनोत्थितेनेव स्वयमाशुकविसिंहेन समदर्शि। सर्वासामिति पदन्यासे सर्वेषामिति स्खलितम्। लब्धावसरः स परीक्षकः 'विरम तावत्' इत्युक्त्वा सद्योबद्धेन पदैनैवमाक्षिप्तवान्-

अम्बिकादत्तः- "अनवद्ये ननु पद्ये गद्ये हृद्येऽपि ते स्खलति वाणी ।
तत् किं त्रिभुवनसारा तारा नाराधिता भवता ॥"

'किं सरस्वती नोपासिता त्वया ? यदेवमपशब्दं प्रयुङ्क्षे' इति भावस्य प्रतिपादके तदीयश्लोकेऽस्माकं युवा दोषविद्दोषमद्राक्षीत्। अभियुक्तोऽयं ततः

प्रत्यभियोगेनेदमाह-

गणपतिः- 'नेह सारशब्दो विशेष्यलिङ्गः, सार इति वक्तव्ये सारा तारा इति अनुप्रासाय प्रयुक्तमसाधु भवता' इति ब्रुवन्नेवमप्राक्षीत्-

"सुधां हसन्ती मधु चाक्षिपन्ती यशो हरन्ती दयिताधरस्य ।
न तेऽलमास्यं कविता करोति नोपास्यते किं दयिताधदेहः ॥"

('किं तारा स्त्री नोपासिता ?' इति मां पृच्छसि; 'त्वया किं पुमान् कान्तार्धविग्रहो नोपासितः ?' इति प्रतिप्रश्नः)

अम्बिकादत्तः- "उच्चैः कुञ्जर मा कार्षीर्बृंहितानि मदोद्धतः ।
कुम्भि कुम्भामिषाहारी शेते सम्प्रति केसरी ॥"

गणपतिः - पुनश्च दोषः । न कर्मधारयान्मत्वर्थीयः । कुम्भिकुम्भामिषाहारः इति बहुव्रीहिः स्यात् । हारी केसरी इत्यसाधु प्रयुक्तमनुप्रासाय-

"समासीनो रसाले चेन्मौनमावह मौकले ।
लोकः करोतु सत्कारं मत्वा त्वामपि कोकिलम् ॥"

अम्बिकादत्तः- "ज्योतिरिङ्गण न किन्नु मन्यसे यत्त्वमेव तिमिरेषु लक्ष्यसे ।"

गणपतिः- "किन्नु दीप हवने विभाससे वायुना बहिरहो विधूयसे ॥"

अत्र शितिकण्ठवाचस्पतिरस्य वादस्योपसंहाराय द्वारमदीदृशत्। परस्परव्यक्तिगतमपवादमपवर्ज्य, उभावपि गौडदाक्षिणात्यौ परस्परजातिपरिहास-वचनैरूपसंहरतामेनं घट्टमिति माध्यस्थ्यमकरोत्॥

अम्बिकादत्तः- "भट्टोऽखिलोऽट्टोपरि वरवध्वा निपीय मध्वारभते विहारम्।"

गणपतिः-

"असुव्ययो वाऽस्तु वसुव्ययो वाऽप्यमी न मीनव्यसनं त्यजन्ति ॥"

अथ परीक्षायाः समाप्तौ परीक्षां तीर्णवन्तं रसिकाग्रगण्योऽम्बिकादत्तो गणपतिं वृद्धोयुवानमाश्लिष्यन्नामोदवचनैः सन्तृप्तिं प्राचीकटत्। गणपतिश्च सविनयमवोचत्-

'वादेऽस्मिन् ममापराधाः क्षन्तव्याः' इति। 'सर्वानपराधान् समाप्तिपद्यचतुर्थचरणीयं मीद्वयं पर्यमार्क्षीत्' इति सोऽप्यभाणीत्। (वस्तुतस्तु 'अमी न मीनव्यसनं' इत्यत्र मीनद्वयं वर्तते) एवं व्यक्तिर्गणपतिः-

दत्तवानम्बिकादत्त-जातये गौडनीतये।
मीनद्वयं विवादान्त-पद्यपादनिवेशितम्॥

तदानीमनेन यूना-

प्रीणिता दाक्षिणात्येन सूरिणा संसदुत्तमा।
प्रियवर्णद्वयावृत्ते-स्तुष्टा परिषदुत्थिता॥

उत्थानात्पूर्वं तत्रायं "काव्यकण्ठ"इत्युपहारः अस्मै परिषदा दत्तः।

# प्रास्ताविकपद्यानि

(श्रीमत्कपालिशास्त्रिणा विरचितवासिष्ठवैभवग्रन्थादुद्धृतोंऽशः)

क्री. श. १९०४ संवत्सरे मद्रपुरे प्रथममष्टावधानप्रणयनावसरेऽस्मदाचार्यस्य वासो रामस्वामिवीथीवसतेः शातञ्जेरीरामस्वाम्यार्येण सहाभवत्। एकदा तत्र आङ्गलविद्यास्नातकाः संस्कृतज्ञाः काव्यकण्ठविदुषः कवितां परीक्षास्वादितुमागताः। अपराह्णे स्वल्पाशयनात्परं सर्वैरारब्धे ताम्बूलचर्वणे। कवीन्द्रेण ताम्बूलमस्पृशता स्थीयमानेन सर्वैः कारणं पृष्टेन 'नास्ति ममैतद्व्यसनम्' इत्युक्तम्। अनेन प्रसङ्गेन 'ताम्बूलचर्वणमधिकृत्याख्यायतां पद्येन भवदभिप्रायः' इत्यनुयुक्तौ निसर्गतो नियतदेहयात्रावृत्तवित्तस्तस्मिन्ननासक्तोऽपि तद्दूषयन् द्रव्यगुणदोषविदायुर्वेदविज्ञानानुगतं स्वीयं भावं सरलेन श्लोकेनावेदयते स्म ॥

"सुधाधिक्यं स्पृहेच्छत्रुः फलाधिक्यं स्पृहेद्भिषक् ।
पत्राधिक्यं स्पृहेज्जाया माता तु त्रितयं स्पृहेत् ॥" इति ॥

[ सुधा शुक्लवर्णं फलपत्राभ्यां मेलने रञ्जकं द्रव्यम्। तदाधिक्यं मुखे जिह्वायां च व्रणं करोति। तस्मात् शत्रुस्पृहास्पदम्। फलं क्रमुकम्। तदाधिक्ये रोगः। अगदंकरस्येष्टं तत्। जीविकाप्राप्तेः। पत्रं ताम्बूलदलं वृष्यं। इष्टं हि तत् भार्यायाः; कारणं स्पष्टम्। त्रयाणां फलपत्रसुधानां यथार्हप्रमाणं सेवनं आरोग्यप्रदम्, जीर्तिकरत्वात्। तदिष्टं हि मातुस्तनूभवत्राणपरायणायाः। त्रितयमित्यत्र त्रयाणां यथायोगं मेलनं विवक्षितम्।]

एवमायुर्वेदीयगुलिकाः कवितारसानुपानेन ग्राहयितुमसमानमस्य सामर्थ्यमालोक्य सन्तृप्तिमापुः सर्वे ॥

***

तदात्वे तण्डलं-सुब्रह्मण्यशास्त्रिमहोदयेन (कालान्तरे स यज्वाऽभवत्) काव्यकण्ठः स्कन्दगणेशपार्वतीपरमेश्वरपरतया श्लोकमेकं कवयितुमुक्तः निमेषमात्रेणैवं अभाणीत्-

"जगतीधरजामाता भवतां भव्याय भूयसे भवतु ।
कञ्चिदकिञ्चनमपि यद्वीक्षा विदधाति शक्रसमम् ॥"

इति । (जगतीधरजा पर्वतजा पार्वती माता इति देवीपरम् । जगतीधरः पर्वतस्तस्य जामाता शिव इति महादेवपरम् । जगतीधरजा माता यस्य स इति स्कन्दगणेशपरम् ।)

***

अन्यदा वेदं-वेङ्कटरायशास्त्रिमहाशयैर्विश्रुतपण्डितैः समागमे प्रासङ्गिकमाशुपद्यमिदमुक्तम् -

"स्यतु सर्वज्ञशिरोमणिदीधितिदोषप्रदर्शनेऽपि पटुः ।
भवतां शङ्काः शङ्करहरिणदृशो हासनवशास्त्री ॥"इति ॥

[ अत्र सर्वज्ञ-शिरोमणि-दधीति-शब्दाः श्लिष्टाः । सर्वज्ञस्य महाविदुषः शिरोमणि-भट्टाचार्यस्य दीधित्याख्यानैयायिकग्रन्थेऽपि दोषप्रदर्शने पटुरयं शास्त्री । पक्षे,

सर्वज्ञस्य शिवस्य शिरोमणेश्चन्द्रस्य दीधितौ दोषप्रदर्शने पटुरयं मन्दहासो देव्याः ॥ ]

आदिपुरं (तिरुवोत्तियूर्) प्रथममागते काव्यकण्ठे, सविस्तरं स्थलवृत्तान्तं कथयता कपालिना आदिपुरेश्वरालायप्रकारे प्रतिष्ठिता कालीमूर्तिः प्रदर्शिता। तस्याः पुरो वर्तुलाकारशिलया पिहितस्य कूपस्यान्तर्देवि स्थितेत्यैतिह्यम्। तन्निशम्य सपदि स्तुतवाननेन पद्येन कूपस्थाम् देवीम्-

"कूपे विभासि किल कोपवति त्रियामा-
चारिष्वशेषजगदीश्वरि कालि भद्रे।
विभ्राजदादिपुरवासिनि दासमापत्-
कूपादुदञ्चय पदाम्बुजभक्तमेतम् ॥"

***

आदिपुर एव वसत्याचार्ये स्वशिष्याद्वासुदेवात् (अधुना अरुणाचले सुविदितः संस्कृतोपाध्यायः श्रीवासुदेवशास्त्री) भगवन्महर्षिसन्निधिमधिवसतः पत्रमागतम्। तच्च वचनेन लिखित्वा पद्येनोपसंहृतं तदानीम् बालेन लेखकेन। तस्येदमन्तिमं चरणं भवति - 'वार्तेयं शुभसहिता प्रहर्षिणी च' इति। (प्रहर्षिणी वार्ता, प्रहर्षिणी वृत्तं च) असमाप्तकाव्यपाठेन तदात्वे किञ्चिदेवाधीतकाव्येन वत्सेन रचितं पद्यमदुष्टमवलोक्य तुष्टः शिष्यप्रीत्या स्वयं च प्रतिपत्रं वचनेन विरचय्य पद्येनोपसंहृतवानाचार्यः। शिष्यजनवचोर्विद्याभिवर्धनीं सत्याविरुद्धामनुग्राहिकां वाचं विनियोक्तुमाचार्यस्य प्राभवमद्वितीयमिति अस्मदादेरनुभवसिद्धम्। तदिदं पद्यं भवति-

"वासुदेव तव नव्यकाकली-पत्रमद्य मम हस्तमागतम् ।
कीरकूजितमिवातिसुन्दरं बालभाषितमिवातिमञ्जुलम् ॥"

अवशिष्टमप्यदृष्टं श्लेषेण चमत्कृत्य बालेन कवयितुमुपक्रान्तमिति मुदित एवं लिखितवान् ॥

***

क्री.श. १९०९ संवत्सरे द्वितीये आदिपुरवासे प्रसङ्गवसात् पवित्रं प्राचीनं आदिपुरक्षेत्रं पुरा किल वेदविद्यावासभूमिः विद्वद्बृन्दनिषेवितमि-त्यस्मदुक्तिमाकर्ण्य सद्यः,

"आदिपुरे विजयन्ते वादिजनालापमुखरिताशान्ते ।
शीतललोचनकोणाः शीतांशुकलाभृतः प्राणाः ॥"

इत्याह कवीश्वरः ॥

***

तदानीमेकदा निजचरित्रकथनप्रसङ्गे भ्राता शिवरामशास्त्रिणा सह कालीघट्टात् प्रत्यावर्तनं ब्रुवाणः "बाल्येऽपि सकृदेव मां तपोर्थं गतवन्तं गृहिणीस्मरणं अस्प्राक्षीत् । वृत्तस्य कथने का नाम लज्जा ?" इत्युक्त्वा पद्यमिदं अवादीत्-

"ध्यायन्नपि प्रमथनाथपदारविन्दं वर्षासु मञ्जुरुचमम्बुमुचं विलोक्य ।
कान्तावियोगचलितः कविचक्रवर्ती गङ्गातटे गणपतिर्न जगाम शान्तिम् ॥"

तस्मिन्नेव समये प्रसक्तानुप्रसक्तिकमिदमाह -

"कति कति न वा पश्यामोऽमी वयं मनुजाधमान्
उदरभरणे सक्तान्नक्तं वधूरतिकाङ्क्षिणः ।
इह तु भुवने विद्वानेकः परस्य पिनाकिन-
श्चरणकमलं ध्यायं ध्यायं कृतार्थयति क्षपाः ॥"

अन्यदा समुद्रतीरे सायमस्मासु सम्भाषमाणेषु स मौनमवलम्ब्योपविष्टः । 'किमपि ध्यायतीव भवान्' इति पृष्टः पद्यमेकं प्राह । चतुर्थचरणमेव प्रत्युत्तरतया प्रथमं निर्गतम् । ततः पद्यं पूरितम् । तदिदं भवति-

"कुलिनः क्षुद्राय प्रवर इति दत्ते निजसुता-
मनार्यान् विज्ञाश्च प्रभव इति गायन्ति शतशः ।
बलं बाह्वोर्लुप्तं हृतमपि च वाग्वीर्यमरिभि-
र्दशां देशस्यैतां प्रतिपदमयं ध्यायति जनः ॥"

अन्यच्चेदमुक्तम्-

"अरिभिरदयैः क्रान्तायै ते मुहुर्मुहुरुद्धतैः
करमविकलं दातुं धीरो न कोऽपि विलोक्यते ।
क्व तव दयितास्ते ते पूर्वे धरे भरतादयो
यदजितभुजादुर्गस्थायास्तवाम्ब न भीरभूत् ॥"

***

क्री. श. १९०७ संवत्सरात्पूर्वमेवोपसंहृताष्टावधानक्रीडस्य तपसि गाढबद्धदृष्टेरपि नासीत्काव्यालापवर्जनं काव्यकण्ठस्य। तस्मादस्माभिरष्टावधानविधानविधाः पृष्टे, तांश्चाचक्षाणे शिष्यवत्सले, सकृद्वा अष्टावधानं, द्रष्टव्यमिति कौतुकेऽस्मान् आविशति, 'एष कानप्यंशान् दर्शयामि' इत्यवोचदाकरविदाचार्यः। अत्रान्तरे विदितपूर्वः कश्चन संस्कृतज्ञ आन्ध्रकविरागतः। अनामयप्रश्नात्परं 'कवितामधिकृत्य मतं भवतो वसन्ततिलकया वक्तव्यं' इत्यभ्यर्थितवान्। लेखफलके षट्पञ्चाशत्स्थानात्मकं कोष्ठं स स्वयं विलिख्य यथानिर्दिष्टं स्थानेऽष्वक्षरविन्यासार्थमाशुधाराकवीन्द्रस्य हस्ते फलकं न्यधात्, स्वयं स्थानानि निर्दिष्टवान्। पौर्वापर्यव्यतिक्रमेण निर्दिश्यमानेषु स्थानेष्वेकैकमक्षरं यथास्थानं न्यास्थदाचार्यः। तदिदं पद्यं भवति-

"प्रीतिं ददाति विपुलां श्रियमातनोति
निर्मांति नूत्नसमयं दुरितं धुनोति।
आर्द्रीकरोति हृदयान्यपि देवतानां
कस्मै शुभाय न भवेत्कविता विदोषा॥"

***

क्री. श. १९०३ संवत्सरे अरुणाचलक्षेत्रे वेदपाठशालायामध्यापके पुण्यश्लोके पञ्चनदशास्त्रिमहोदये कालधर्मं गते, तस्य स्थानमवहन्महनीयवृत्तो महोपासकः रामचन्द्रघनपाठिमहोदयः। तदानीमिदं पद्यद्वयमामोदेनावददचार्यः-

"पञ्चभूतमयमेव विग्रहं हन्त पञ्चनदपण्डितो जहौ।
तस्य कीर्तिरिति विश्रुतं पुरा चन्द्रगौरमधुनाऽपि दृश्यते॥

रामचन्द्रघनपाठिनाऽधुना तस्य कृत्यममलं प्रसाध्यते ।
पश्चिमोदधिमुपेयुषो रवेस्तारकानिकरकामिना यथा ॥"

स्वात्मनाऽनुगृहीतश्रीविद्योपदेशे तस्मिन् घनपाठिमहोदयेऽस्मदाचार्यस्य वत्सरैः सह वात्सल्यमवर्धत । पञ्चविंशतिवर्षेभ्यः परं तस्मिन् गुणराशौ स्वशिष्ये दिवंगते, चरमश्लोकाख्यानावसरे निस्सृतया वासिष्ठवाण्या तद्विस्पष्टं भवति-

"भारद्वाजो रामचन्द्रो महात्मा वेदाचार्यो नैष्ठिकः सत्यसन्धः ।
पुण्यश्लोको भूमिमापूर्य कीर्त्या शोकापेतं शाम्भवं धाम भेजे ॥"

"भवतु गणपतेर्वागीशदासस्य सत्या
भजतु पदमशोकं रामचन्द्रो द्विजेन्द्रः ।
भजतु गुणपयोधेः कीर्तिशेषस्य तस्य
प्रविमलगुणसङ्घो वित्तवत्तस्य पुत्रान् ॥"

***

पिङ्गलसंवत्सरे (क्री. श. १९१७) कुण्डलीपुरे दारैः सह तपस्यन्नाचार्यः एकदा तत्रोपान्तप्रदेशेषु कण्टकवृक्षकाकीर्णानि प्राचीनकलाकौशलसाक्षीणि भग्नभित्तिकाविग्रहादीनि जीर्णोद्यानमन्दिराणि सोमेश्वर-अर्धनारीश्वरादीनां पुरातनपूजायतनानि समीक्षा विस्मितो विनष्टानि तानि शोच्यावस्थानि प्रस्तूय सहचरैः सह सम्बभाषे । अरुणाचलक्षेत्रवासिभिराचार्यस्य सौहार्दगौरवास्पद-भूतैरवधूतैरीश्वरस्वामिभिः कमपि तत्रस्थं विग्रहमधिकृत्य तत्कथामावेदितः काव्यकण्ठः कवितामेतामाह-

"अर्गलासदृशदोर्लसत्प्रभा-सर्गकारिमणिकुण्डलप्रभो ।
भर्गपादपरिचारिणां पते दुर्गपालक नमोऽस्तु ते नमः ॥"

***

एकदा तन्त्रीवार्तया चिरकालशिष्यस्य स्वयं दत्तपुत्रस्य सुब्रह्मण्यशास्त्रिणः कामपि व्रणरुग्णतां विदित्वा तदपेक्षानुरोधेन धूमशकटिकया दूरप्रयाणेनारुणाचलात् सिकन्द्राबादनगरं प्राप प्रेमवंशवदो वासिष्ठ अचार्यः। आतुरश्चाचार्यमालोक्य तत्कृतोपक्रमविशेषेण विशेषतस्तत्सान्निध्यप्रभावादचिरेण स्वस्थोऽभवत्। योगसाधनजन्योऽयं रोग इत्यासीत् तन्त्रीवार्ता। तथा च योगशक्तिसम्मुल्लासं धारयितुमपरिपक्वे सति देहे, सति च न्यूने वा संस्कारे, रोगोपहतसत्त्वं भवति शरीरमिति प्रतीतिर्योगिषु प्रसिद्धा। अत एव मनःप्राणशरीरशुद्धिं शक्त्युल्लासस्य पूर्वाङ्गतयोपदिशन्ति शास्त्राणि। तथाविधयोगविलासप्रतिबन्धजन्मेदं देहदौस्थ्यमिति शिष्यमतिमतिरस्कृत्य 'सति प्रवृद्धे ज्ञानप्रकाशे नावकाशो भवेदीदृशामामयानाम्' इति विवक्षुः शिष्यस्य प्रार्थनानुरोधेन आर्यावृत्तबद्धेन आशीःपद्येन तमन्वग्रहीत्-

"अज्ञानध्वान्ताश्वा-न सह्यरोगाग्निकीलसन्तप्तान्।
भासुरशीतलदृष्टि-प्रभया परदेवताऽवतादस्मान्॥" इति ॥

# सुकन्यादस्रसंवादः

महर्षिश्च्यवनो नाम वने वनरुहास्यया ।
युवत्या भार्यया वृद्धः सहावात्सीत् सुकन्यया ॥१ ॥

तयोर्निवसतोस्तत्र गतः कालः कियानपि ।
श्रेष्ठमाचरतो धर्मं पूर्वैः सद्भिरनुष्ठितम् ॥२ ॥

एकदा मुनिवर्यस्य स्नातुं याता कुटुम्बिनी ।
सरः कह्लाराजीवराशोभि सारसनादितम् ॥३ ॥

तत्राभिषिक्तं संछन्नां तनुनार्द्रेण वाससा ।
वार्षिकाम्भोदसंकाशसतोयकबरीभराम् ॥४ ॥

विमलादर्शवदनां विशालाऽधीरलोचनाम् ।
राजत्कपोलफलकां सुदतीं पल्लवाधराम् ॥५ ॥

उत्तुङ्गकर्कशान्योन्यसंसक्तपृथुलस्तनीम् ।
तनुमध्यां घनश्रोणीं सर्वावयवसुन्दरीम् ॥६ ॥

व्यलोकेतामाश्विनेयो भिषजौ नाकवासिनाम् ।
विस्मयं परमं प्राप्तौ समीपं चोपजग्मतुः ॥७ ॥

तौ समीपमुपागत्य सुकन्यायाः सुयोषितः ।
ऊचतुर्वचनं श्लक्ष्णमश्विनौ रूपमोहितौ ॥८ ॥

भार्या कस्यासि रम्भोरु कस्य त्वं तन्वि कन्यका ।
कुतो वने चरस्यस्मिन्वनजातायतेक्षणे ॥९ ॥

तावुवाच सुरश्रेष्ठौ सुकन्या ह्रीमती वचः ।
गृहिणी च्यवनस्याहं शर्यातेर्भूपते सुता ॥१० ॥

अथोचतुः प्रहस्येदमश्विनौ राजनन्दिनीम् ।
वृद्धस्य गृहिणी किं त्वं च्यवनस्य द्विजन्मनः ॥११ ॥

सुरस्त्रीदुर्लभं रूपं क्व ते कमललोचने ।
वृद्धशाखामृगाकारश्च्यवनः क्व धरामरः ॥१२ ॥

क्वेदं ते यौवनं तन्वि जृम्भमाणघनस्तनम् ।
पलितश्मश्रुवृद्धत्वं जीर्णाङ्गं क्व द्विजन्मनः ॥१३ ॥

न त्वं योग्या मनुष्यस्य देवेन्द्रदयितोपमे ।
विशेषाज्जीर्णवयसः च्यवनस्य सुमध्यमे ॥१४ ॥

त्वया विभूषितमिदं वनं सर्वमभूषया ।
कयाचिन्नोपमेया त्वमन्यया तन्वि योषया ॥१५ ॥

गर्हणीयः स शर्यातिर्यस्त्वां सर्वाङ्गसुन्दरीम्।
रूपहीनाय वृद्धाय विततार विलासिनि ॥१६॥

त्वां विलोकयतोः क्वापि करुणा समुदेति नौ।
वृद्धस्य युवतीं भार्यामुद्बुद्धाम्भोजलोचनाम्॥१७॥

विसृज्य च्यवनं वृद्धं गताध्वानममन्मथम्।
भजैकमावयोर्भीरु यस्ते चित्ताय रोचते ॥१८॥

आवां प्रसिद्धौ नासत्यौ भिषजौ नाकवावासिनाम्।
दीर्घाक्षि गुप्तामावाभ्यामन्यस्त्वां नालमीक्षितुम्॥१९॥

न ते भयं पृथुश्रोणि च्यवनादन्यतोऽपि वा।
एकं लोकोत्तराकारे भजमानं भजावयोः॥२०॥

यदि च्यवनमेव त्वमकाममनुवर्तसे।
धिक् ते सुन्दरतामेतां वनज्योत्स्नामिवाफलाम्॥२१॥

एतावदुक्त्वा नासत्यौ विजने चारुदर्शनौ।
उत्तरं सम्प्रतीक्षेतां सुकन्यायाः सुयोषितः॥२२॥

एवमुक्ता सुरूपाभ्यां सुराभ्यामपि सुव्रता।
हृदयेनापि सन्मार्गम् सुकन्या नात्यलङ्घत ॥२३॥

लज्जयावनतं वक्त्रं किञ्चिदुन्नम्य सा सती ।
ईषद्रक्तान्तनयना भर्तृदूषणजक्रुधा ॥२४ ॥

स्वसेव भूयः स्नेहेन वक्तुकामा हितं तयोः ।
धैर्येण रोषं संस्तभ्य शर्यातिदुहिताऽब्रवीत् ॥२५ ॥

अहं न शोचनीयाऽस्मि भवद्भ्यां सुरपुङ्गवौ ।
दत्ता मे देवदेवेन भक्तिर्वृद्धेऽपि भर्तरि ॥२६ ॥

या भक्तिसहिता नारी कान्ते गतवयस्यपि ।
न शोचनीया सा प्राज्ञैर्यत्स्वयं सा न शोचति ॥२७ ॥

या भक्तिरहिता नारी कान्ते नववयस्यपि ।
शोचनीयैव प्राज्ञैर्यत्स्वयं सैव शोचति ॥२८ ॥

पत्यौ भक्तिः प्रमोदस्य कारणं कुलयोषिताम् ।
सा स्त्रीणां परमो धर्म इति शास्त्रविदो विदुः ॥२९ ॥

रूपेण भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा रूपेणाधिकं पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥३० ॥

वयसा भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा नवं वयसा पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥३१ ॥

विद्यया भर्तरि प्रीतिं या करोति कुलाङ्गना।
सा विद्ययाऽधिकं पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥३२॥

सम्पदा भर्तरि प्रीतिं या करोति कुलाङ्गना।
सा सम्पदाऽधिकं पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥३३॥

या करोति वधूः प्रीतिं पतित्वादेव भर्तरि।
पतित्वाभावतोऽन्यस्य सा न स्याद्व्यभिचारिणी ॥३४॥

या पतिं प्रमदा हित्वा पुमांसमितरं भजेत्।
न केवलं तया भर्ता पुमानन्यश्च वञ्चितः ॥३५॥

शब्दादयः सुरश्रेष्ठौ विषया लोकवञ्चकाः।
जयाय नियमस्तेषु पराभूत्यै विपर्ययः ॥३६॥

विषयेष्वेव बाह्येषु भावबन्धं करोति यः।
विषयाणां सबाहुल्यान्न क्वचिल्लभते स्थितिम् ॥३७॥

तादृशस्य मनोभावश्चापलेन प्रतिक्षणम्।
स्थितिमप्राप्य कुत्रापि नित्यदुःखाय कल्पते ॥३८॥

अन्यस्य तरुणीं काङ्क्षेद्यः पुमानल्पदर्शनः।
तेनात्मनो वधूस्त्यक्ता लभ्यते वेतरा न वा ॥३९॥

असतीमितरां लब्ध्वा पण्डितः को नु मोदताम् ।
सा पूर्वमिव भर्तारं किं नात्मानं च मुञ्चति ॥४० ॥

यस्याः प्रमाणं नो सत्यं नार्या रागान्धचेतसः ।
असतीमल्पविज्ञानः काम्येव श्रद्दधाति ताम् ॥४१ ॥

स तया पुरुषः कामी मन्दश्चञ्चलया स्त्रिया ।
भ्रंशितः प्रथमं धर्मात्स्वयं चान्ते विसृज्यते ॥४२ ॥

सत्यं सुरवरौ रक्ष्यं स्त्रिया वा पुरुषेण वा ।
तद्रक्षितं रक्षति स्वं नैव रक्षत्यरक्षितम् ॥४३ ॥

सत्यानपायिनो रागा यासामुत्तमयोषिताम् ।
तासामुत्तमविद्वांसो विदुर्नामापि पावनम् ॥४४ ॥

उत्सृष्टाजनकेनाहं च्यवनाय महात्मने ।
प्रभुणा तं तु सम्बन्धं नानृतं कर्तुमुत्सहे ॥४५ ॥

भवन्तौ शास्त्रनिष्णातौ देवयोनी विशेषतः ।
निन्द्यं नैतादृशं भावं मनसा कर्तुमर्हतः ॥४६ ॥

यच्चोक्तं मुनिमुद्दिश्य माननीयं तपोनिधिम् ।
तत्र वां चातुरी देवौ तुदतीव मनो मम ॥४७ ॥

येन दग्धः पितुर्वैरी जातमात्रेण दानवः ।
न बिभेतु जनः को वा तस्माच्चण्डदृशो मुनेः ॥४८ ॥

दृष्टप्रभावः स मया ब्रह्मर्षिरमितद्युतिः ।
ज्वलल्लोचनवेधिन्या पूर्वं पाणिनिपीडनात् ॥४९ ॥

नावमान्यः सतां मान्यो भवद्भ्यां च्यवनो मुनिः ।
निर्दहेदपि लोकांस्त्रीन्यदि क्रुद्धः स भार्गवः ॥५० ॥

सनातनस्य धर्मस्य पालयन्तौ युवां गतिम् ।
अङ्गीकृत्य स्वसारं मां स्वं मार्गं गन्तुमर्हथः ॥५१ ॥

एवं चतुरभाषिण्या प्रत्याख्यातौ सुकन्यया ।
युक्तं वचनमब्रूतामाश्विनेयौ सुरोत्तमौ ॥५२ ॥

प्रधानं यदि कल्याणि धर्ममेवाभिमन्यसे ।
कामादर्थाच्च सुश्रोणि प्रीतौ स्वस्त्वयि भामिनि ॥५३ ॥

भर्तारमभिरूपं ते कर्तास्वो नवयौवनम् ।
सत्येन समयेन श्वः केनापि यदि वाञ्छसि ॥५४ ॥

सचायं समयस्तन्वि युवानं सुन्दरं मुनिम् ।
आवां च समभिप्रेक्ष्य त्रिष्वेकं वृणु वल्लभम् ॥५५ ॥

अश्विनोस्तमभिप्रायं सुकन्या वरवर्णिनी ।
नाथाय कथयामास च्यवनाय महात्मने ॥५६ ॥

अङ्गीचकार तत्सर्वं च्यवनो दीर्घदर्शनः ।
दस्रौ श्वो भूत आगत्य यथोक्तं कर्तुमुद्यतौ ॥५७ ॥

नासत्ययोर्गिरा मौनी विवेश च्यवनः सरः ।
तौ च प्रविष्टौ तदनु स्वर्लोकभिषजावुभौ ॥५८ ॥

ततस्तस्मात्सरोमध्यान्निर्गताः पुरुषास्त्रयः ।
तुल्यप्रमाणरूपास्ते सुकन्यायाः पुरोऽभवन् ॥५९ ॥

तानालोक्य विशालाक्षी शर्यातिकुलनन्दिनी ।
चिराय चिन्तयामास मम भर्ता क एष्विति ॥६० ॥

ततः शुद्धेन भावेन चिन्तयित्वा नृपात्मजा ।
त्रिष्वेकं पुरुषं वव्रे च्यवनो मुनिरेव सः ॥६१ ॥

च्यवनः स्वां प्रियां भूयः प्राप्य हर्षं परं ययौ ।
शीलेन चास्याः संहृष्टौ देववैद्यौ बभुवतुः ॥६२ ॥

"इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिः सुकन्यादस्रसंवादो नाम घण्टाद्विषष्टिबन्धः समाप्तः"

# पाण्डवधार्तराष्ट्रसम्भवः

जगद्गुरूनहं वन्दे ब्रह्मविष्णुमहेश्वरान् ।
वाणीलक्ष्मीशिवानाथान् सृष्टिस्थित्यन्तकारिणः ॥० ॥

यशोभिर्दिग्गिभश्रेणीदन्तकान्तिमलिम्लुचैः ।
मण्डितः पाण्डुरित्यासीत् भारतो भारते नृपः ॥१ ॥

तस्य सर्वाङ्गमङ्गस्य प्रज्ञयैव विलोचनी ।
धृतराष्ट्र इति भ्राता ज्येष्ठः श्रेष्ठमतेरभूत् ॥२ ॥

पूर्वजेनामुना पाण्डोः परिणीता गुणोन्नता ।
सुबलस्य सुता राज्ञो गान्धारी नाम सुन्दरी ॥३ ॥

सा रामा यौवनारम्भे किञ्चित् परिचितानपि ।
जनुषान्धं पतिं प्राप्य विसस्मारेव विभ्रमान् ॥४ ॥

यादवीयामिनीनाथवदना काचिदङ्गना ।
काले तस्मिन् पृथा नाम पृथिवी मण्डले बभौ ॥५ ॥

तां सख्ये कुन्तिभोजाय शूरः शूरवरः पिताः ।
प्रददौ दुहितृत्वेन प्रीतिं मूर्तिमतीमिव ॥६ ॥

अमुष्यै किल सन्तुष्टो दुर्वासाः परिचर्यया ।
विद्यामुपदिदेशैकां देवानयनदूतिकाम् ॥७ ॥

न सा मित्रं वशीचक्रे केवलं विद्यया तया ।
केतकीकलिकाकान्तैः कोमलैरङ्गकैरपि ॥८ ॥

सुतं सहजवर्माणं लब्ध्वा राजीवबन्धुतः ।
कलङ्कशङ्किता सद्यः सा मुमोच सहाश्रुभिः ॥९ ॥

कुन्तीवासन्तिकामुक्तं राधाधात्रीभृतं ततः ।
सूर्यसूनुप्रसूनं तद्वीरश्रीः शिरसा दधौ ॥१० ॥

कुन्त्याः कार्याजितरतेः त्विषां पत्युरनुग्रहात् ।
नैवाभ्रश्यत कन्यात्वं न चाक्षीयत यौवनम् ॥११ ॥

दत्ता सा कुन्तिभोजेन पाण्डुना जगृहे करे ।
दत्तः कुसुमबाणेन तया पाण्डुस्तु चेतसि ॥१२ ॥

अन्तः प्रविश्य भूजानेर्बालसारङ्गलोचना ।
चरणालक्तकेनेव रक्तं चेतश्चकार सा ॥१३ ॥

कन्या चान्या महीशेन माद्री भद्रीभगामिनी ।
परिणीता परिणतप्रालेयकिरणानना ॥१४ ॥

कतिचिद्वत्सरान् कान्ते ते द्वे विश्वम्भरामपि ।
दाक्षिण्येन सदीर्घाक्षो बुभुजे मनुजेश्वरः ॥१५ ॥

जहार मृगया दूरं महीदारन्तमेकदा ।
सकृन्निषेवितमपि व्यसनं हि परा भवेत् ॥१६ ॥

क्रीडन्तं मृगसुन्दर्या स मुनिं मृगभूमिकाम् ।
पाण्डुर्जघान बाणेन स पाण्डुं घोरया गिरा ॥१७ ॥

अनुभूय भवान्कान्तामन्तं दिष्टस्य यास्यति ।
चञ्चरीकैवाघ्राय चाम्पेयकलिकामिति ॥१८ ॥

अथासारं भवं बुद्ध्वा बन्धुन्यस्तधराभरः ।
सतीभ्यां सहपत्नीभ्यां पाण्डुः प्रव्रजितो वनम् ॥१९ ॥

श्रुत्वा तत्र महर्षिभ्यो नापुत्रो गतिमानिति ।
राजा क्षेत्रजसंतत्यै कुन्त्या साकममन्त्रयत् ॥२० ॥

अथालिकुन्तलाकुन्ती बहुपुत्राभिलाषिणः ।
कौमारोपार्जितां विद्यां भेजे पत्युर्निदेशतः ॥२१ ॥

तस्यां युधिष्ठिरो नाम धर्माद्विद्याबलागतात् ।
क्षेमाय क्षितिलोकस्य पुण्यश्लोकः सुतोऽजनि ॥२२ ॥

गजायुतबलं पश्चादवाप गजगामिनी ।
पृथुनेत्रं पृथा पुत्रं भीमं नाम समीरणात् ॥२३ ॥

अर्जुनं तनयं प्राप वज्रपाणेरियं ततः ।
प्रसादं हरितां पंक्तिः प्रमोदं मरुतां ततिः ॥२४ ॥

अपि सर्वगुणोपेतैर्नातृप्यत्त्रिभिरात्मजैः ।
दिदृक्षुः पुत्रपूर्णाङ्कां माद्रीमपि महीपतिः ॥२५ ॥

मद्रेशवंशनन्दिन्यै मेदिनीभर्तुराज्ञया ।
विततार पृथा देवी विद्यां देववशङ्करीम् ॥२६ ॥

दस्राभ्यां दयमानाभ्यां धरणीशवधूरसौ ।
नकुलं सहदेवं च सुतावाप सतीमणिः ॥२७ ॥

धृतराष्ट्रवधूर्गर्भं कुन्त्याः प्रागेव गर्भिणी ।
चिरं सन्ततिमप्राप्य जघान किल मुष्टिना ॥२८ ॥

फलिते शतधा गर्भे पतिते धरणीतले ।
आसन् व्यासप्रसादेन शकलाः शतमर्भकाः ॥२९ ॥

सर्वक्षत्रक्षये हेतुर्येषां दुर्योधनो मुखम्।
दुःशासनो विकर्णश्च येष्वन्यौ मूर्खपण्डितौ ॥३० ॥

सर्वक्षत्रक्षये हेतो धार्तराष्ट्रस्य जन्मनि।
नवात्यया केवलया जगत्भीत्या च कम्पितम् ॥३१ ॥

खण्डोपरश्चन्द्रखण्डनिर्विशेषालिकस्थली।
अभूत् किल कुलज्योत्स्ना दुस्सला नाम कन्यका ॥३२ ॥

ते बालका ववृधिरे नगरे वने च
मूर्धाभिषिक्तमुनिपुङ्गवलाल्यमानाः।
लोकस्य लोचनवतस्समुत्सवेन
कौतूहलेन च मुनेः कलहप्रियस्य ॥३३ ॥

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिः पाण्डवधार्तराष्ट्रसम्भवो नाम घण्टात्रयस्त्रिंशत् बन्धः समाप्तः

# भृगुवंशोतिहासः

## प्रथमोऽध्यायः

वेदविलोचनज्योत्स्नाश्रुतिधम्मिल्लमल्लिका ।
देवता कापि मे भूयात् रसनारङ्गनर्तकी ॥१ ॥

श्रुतिस्त्रीकबरीकुन्दंमुनिमानसचन्दनम् ।
उमानयनकर्पूरं वन्दे किमपि दैवतम् ॥२ ॥

यस्यापास्य तमः सान्द्रं भूषयन्ती नभःस्थलम् ।
तनुरेका सरोजानां विकासाय प्रकल्पते ॥३ ॥

लोचनोत्पलसन्तोषादायकं तापहारकम् ।
प्रियामुखसमानत्वं यस्यैकं भजते वपुः ॥४ ॥

प्रकृतिर्मर्त्यसङ्घस्य राजलोकविमोहिनी ।
चित्रयुद्धचरित्रेभ्यो यस्यैका कल्पते तनुः ॥५ ॥

प्राग्भूतं प्रलये स्थास्यत्प्राणिलोकस्य जीवनम् ।
एकं कलेबरं यस्य शय्या शालायते हरेः ॥६ ॥

स्वयमेकं भक्षयित्वा कायं किमपि भासुरम् ।
करोति यस्य सर्वेषां क्षुन्निवृत्तिं सुपर्वणाम् ॥७ ॥

सर्वत्र सञ्चरद्यस्य कदाचिच्चाविनिद्रितम् ।
शरीरमेकं भूतानां प्राणनाय प्रकल्पते ॥८ ॥

अखण्डमभितो व्याप्तं सर्वेषामपि कर्मणाम् ।
अवकाशं ददात्येकं महद्यस्य कलेबरम् ॥९ ॥

शरीरं तस्य किमपि स्वभावेन विनश्वरम् ।
पृथक् शरीरं बिभ्राणं जीवाख्यं स प्रकीर्त्यते ॥१० ॥

तं नमामि महादेवं लोककारणकारणम् ।
अन्तकस्यान्तकं भीमं स्वामिनं स्वामिनामपि ॥११ ॥

भृगुवंशेतिहासोऽयं पावनोऽद्य विरच्यते ।
सरलाशुकवित्वस्य धारां दर्शयता मया ॥१२ ॥

## द्वितीयोऽध्यायः

भृगुर्नाम महातेजो ऋषिरासीत्पुरातनः ।
सुराणां भूसुराणां च ...... स्सर्वगुणाकरः ॥१ ॥

योगाचार्यस्तुतस्तस्यब्रह्मचारी महायशाः ।
उशना नाम दैत्यानां जातः कुलपुरोहितः ॥२ ॥

पुनरन्यं सुतं प्राप्तं महर्षिर्वंशवर्धनम् ।
भृगुर्घोरं तपस्तेपे सहपत्न्या पुलोमया ॥३ ॥

सिद्धकर्मा स कालेन वारुणीर्भगवानृषिः ।
गर्भमाधात्पुलोमायां ज्वलन्तं ब्रह्मतेजसा ॥४ ॥

पुलोमा च महत्तेजो ब्रिभ्रती भृगुणा हितम् ।
ददृशे परया कान्त्या प्राचिनोद्यद्दिवाकरम् ॥५ ॥

समिधाहरणार्थाय कदाचन मुनौ गते ।
अतिष्ठदाश्रमे तन्वी पुलोमैका शुचिस्मिता ॥६ ॥

एतदन्तरमासाद्य पुलोमा नाम दानवः ।
विप्रवेषधरः प्राप दुष्टचेतास्तमाश्रमम् ॥७ ॥

कालेन बहुना सोऽयं पुलोमागतमानसः ।
पुलोमादानवः पापो हृष्टः प्राप्य तदन्तरम् ॥८ ॥

प्रेरितः पञ्चबाणेन मर्यादाशतलङ्घिना ।
आससाद स साध्वीं तामसितो रोहिणीमिव ॥९ ॥

तमुपागतमालोक्य पुलोमा चारुदर्शना ।
अतिथिं ब्राह्मणं मत्वा फलमूलैर्न्यमन्त्रयत् ॥१० ॥

सत्कृतः स विशालाक्षा महर्षेः कुलयोषिता ।
भूयो भूयश्च कामेन ---------- ॥११ ॥

सज्जनाचरितं धर्ममतिक्रम्य सनातनम् ।
दोर्भ्यामादाय तामंसे प्रवृत्तो धावितुं खलः ॥१२ ॥

आक्रान्ता तेन पापेन गर्भिणी मुनिभामिनी ।
स्वरेण दीनतारेण चक्रन्द कुररी यथा ॥१३ ॥

सोऽपि पापो न तत्याज क्रन्दन्तीमपि भामिनीम् ।
पूर्णगर्भा विवेकः क्व वशे कामस्य तिष्ठताम् ॥१४ ॥

ततस्तस्याश्च्युतो गर्भो भीताया ऋषियोषितः ।
दीप्तपावकः सन्दिग्धो ज्वलन्ब्राह्मेण तेजसा ॥१५ ॥

च्युतश्च स शिशुः पापं पुलोमानमुदैक्षत ।
ज्वलन्त्या घोरया दृष्ट्या विद्युदेव पुरन्दरः ॥१६ ॥

बालकः स न जानाति जनन्या अवमाननम् ।
तं च शत्रुपुलोमानं को -------- ॥१७ ॥

न च कोपस्य मूलं वा जानाति स मुनेः शिशुः ।
केवलं महिमा तस्मिन्नासीदुग्रो निसर्गतः ॥१८ ॥

मा---- स बालेन ज्वलन्त्या घोरया दृशा ।
निपपात गतप्राणो वज्राहत इव द्रुमः ॥१९ ॥

अथ तं शिशुमादाय विमुक्ता दानवग्रहात् ।
विस्मयं परमं प्राप्ता पुलोमा प्रापदाश्रमम् ॥२० ॥

अथाश्रमं ऋषिप्राप्तो विदितार्थो महातपाः ।
चकार च्यवनं नाम्ना पुत्रं यद्गर्भतश्च्युतः ॥२१ ॥

च्यवनोऽपि वयः प्राप्तो मध्यमं भृगुनन्दनः ।
वनमाप्तुं परां शक्तिं दीर्घाय तपसे ययौ ॥२२ ॥

## तृतीयोऽध्यायः

तस्मिन् काले महीपालः शर्यातिर्मृगयुर्वने ।
चचार सेनया साकमवरोधजनेन च ॥१ ॥

तपति च्यवनो यत्र भार्गवो यतमानसः ।
वल्मीकच्छन्नकायोऽपि निश्चलो निजनिश्चये ॥२ ॥

मृगयायै विचरतः शर्यातेः पृथिवीपतेः ।
चिक्रीड कानने कन्या सुकन्योज्झितशैशवा ॥३ ॥

आलोकमाना विविधान् वृक्षानृक्षेश्वरानना ।
आकर्णयन्ती रम्याणि कूजितानि पतत्रिणाम् ॥४ ॥

ह्रेपयन्ती प्रशस्तेन रूपेण वनदेवताः ।
अनर्घाभरणोपेता पुष्पितेव चरालता ॥५ ॥

सखीभ्यां सवयस्काभ्यां संयुता चारुहासिनी ।
संभाषमाणा मधुरं तास्ताः श्रुतिहिताः कथाः ॥६ ॥

सा चरन्ती महीपाल तनया चारुदर्शना ।
वल्मीकच्छन्नकायस्य मौनिनो निकटं ययौ ॥७ ॥

मुनिर्वल्मीकभूतोऽपि स तामालोक्य कन्यकाम् ।
चक्रमे चारु सर्वाङ्गीं मदनः केन वा जितः ॥८ ॥

साथ वल्मीकमालोक्य स्फुरच्चयवनलोचनम् ।
समीपमाससादास्य मुग्धा मृगविलोचना ॥९ ॥

च्यवनस्य दृशौ मत्वा सा कीटौ पावकाकृती ।
कुतूहलात्कण्टकेन निर्बिभेद शुचिस्मिता ॥१० ॥

स विद्धनेत्रस्तेजस्वी भृगुपुत्रः सुकन्यया ।
क्रुद्धशर्याति ------------- ॥११ ॥

रुद्धे मले सैन्यमासीत्समन्तादपि पीडितम् ।
तद्विज्ञाय महीपालश्चिन्तयामास कारणम् ॥१२ ॥

तपतश्च्यवनस्यात्र वल्मीकच्छन्नवर्ष्मणः ।
केनाप्यपकृतं प्राय इति मेने स चिन्तयन् ॥१३ ॥

पप्रच्छ सर्वसैन्यानि केनाप्यपकृतं मुनेः ।
वृद्धस्य दीर्घतपसः क्रोधिनश्चण्डतेजसः ॥१४ ॥

सर्वे बभाषिरे भूपं सैनिका भीतचेतसः ।
मनसापि च नास्माभिरस्य नापकृतं मुनेः ॥१५ ॥

स पर्यपृच्छत् भूयोऽपि सुहृदो मन्त्रिणस्तथा ।
ऊचुस्ते न वयं विद्मः किल्बिषं कृतमण्वपि ॥१६ ॥

अथान्तःपुरनारीश्च राजा पप्रच्छ सादरम् ।
ताश्च नेत्यब्रुवंत्सर्वास्त्रासोल्लोलितलोचनाः ॥१७ ॥

तत्सैन्यमतिदुःखार्तं शकृद्रोधेन विह्वलम् ।
पितरं चाकुलं दृष्ट्वा सुकन्या वाक्यमब्रवीत् ॥१८ ॥

मया वल्मीकसंसक्तावुभौ कीटौ विलोकितौ ।
कण्टकाग्रेण तौ विद्धौ मत्वा तु बहुपावकौ ॥१९ ॥

अहं च भीता सम्प्राप्ता स्वकीयं शिबिरं पुनः ।
सैनिकानां शकृद्रोधे स हेतुः किं विचिन्त्यताम् ॥२० ॥

दुहितुर्वचनं श्रुत्वा शर्यातिः पृथिवीपतिः ।
सम्भ्रान्तः प्राप वल्मीकं येन च्छन्नो महामुनिः ॥२१ ॥

वल्मीकेनावृतं ज्ञात्वा मुनिं भृगुनन्दनम् ।
राजा प्रसादयामास स्तुवन्गीर्भिः कृताञ्जलिः ॥२२ ॥

नमस्ते भृगुदायाद तपोनित्यमहामुने ।
अपराधं सुकन्याया बालायाः क्षन्तुमर्हसि ॥२३ ॥

नेयं जानाति मे कन्या सुकन्या त्वामिहस्थितम् ।
कीटौ वल्मीकसंसक्तौ मत्वा विद्धयद्दृशौ तव ॥२४ ॥

क्षमस्वेमां महाभाग बालां ज्ञानविवर्जिताम् ।
सैन्यस्यास्य शकृद्रोधं वारयाशु प्रसीद नः ॥२५ ॥

सुहृद्भिर्मन्त्रिभिर्योधैर्भार्यया सुकन्ययापि च ।
भूजिष्यवदहं वर्ते शाधि किं करवाणि ते ॥२६ ॥

अथाब्रवीन्महाराजं च्यवनो भृगुनन्दनः ।
विमुक्तासनबन्धः सन्नुत्थाय तपतां वरः ॥२७ ॥

मृत्तिकामभितो लग्नां पाणिना धूयगात्रतः ।
अभिप्रेत्य च तन्वङ्गीं सुकन्यामन्तिकस्थिताम् ॥२८ ॥

शर्याति शृणु मे वाक्यं यत्ते कन्या मदालसा ।
नेत्रे मम विवेधेयं तस्य दृष्टमिदं फलम् ॥२९ ॥

यदि कामयते सैन्यं स्वस्थमालोकितुं भवान् ।
इयं प्रदीयतां मह्यं कन्या सन्ततये नृप ॥३० ॥

यदि दास्यसि राजेन्द्र करमस्याः कराय मे ।
गतरोधमिदं स्वस्थं तव सैन्यं भविष्यति ॥३१ ॥

तथेत्युक्त्वा महीपालश्च्यवनाय महात्मने ।
विधिना वेददृष्टेन सुकन्यां कन्यकामदात् ॥३२ ॥

अथ स्वस्थेन सैन्येन सहितः पृथिवीपतिः ।
मुनेर्निक्षिप्य तनयां स्वकीयं नगरं ययौ ॥३३ ॥

सुकन्यापि वरारोहा स्थिता धर्मे सनातने ।
गृहिणी गृहिणं नित्यं वृद्धं पर्यचरन्मुनिम् ॥३४ ॥

## चतुर्थोऽध्यायः

अथ केनापि कालेन स्नातुं याता नृपात्मजा ।
सरः कह्लारराजीवशोभि सारसनादितम् ॥१ ॥

तत्राभिषिक्तां संच्छन्नां तनुनार्द्रेण वाससा ।
वार्षिकाम्भोदसङ्काशसतोयकबरीभराम् ॥२ ॥

विमलादर्शवदनां विशालाधीरलोचनाम् ।
राजत्कपोलफलकां सुदतीं पल्लवाधराम् ॥३ ॥

उत्तुङ्गकर्कशान्योन्यसंसक्तपृथुलस्तनीम् ।
तनुमध्यां घनश्रोणीं रम्यां देवाङ्गनामिव ॥४ ॥

व्यलोकेतामाश्विनेयौ भिषजौ नाकवासिनाम् ।
विस्मयं परमं प्राप्तौ समीपं चोपजग्मतुः ॥५ ॥

तौ समीपमुपागत्य सुकन्यायाः सुयोषितः ।
ऊचतुर्वचनं श्लक्ष्णमश्विनौ रूपमोहितौ ॥६ ॥

भार्या कस्यासि रंभोरु कस्य त्वं तन्वि कन्यका ।
कुतो वनेचरस्यास्मिन् ------------ ॥७ ॥

तावुवाच सुरश्रेष्ठौ सुकन्या ह्रीमती वचः ।
गृहिणी च्यवनस्याहं शर्यातिर्भूपतेः सुता ॥८ ॥

अथोचतुः प्रहस्येदमश्विनौ राजनन्दिनीम् ।
वृद्धस्य गृहिणी किं त्वं च्यवनस्य द्विजन्मनः ॥९ ॥

सुरस्त्रीदुर्लभं रूपं क्व ते कमललोचने ।
वृद्धशाखामृगाकारश्च्यवनः क्व धरामरः ॥१० ॥

क्वेदं ते यौवनं तन्वि जृम्भमाणघनस्तनम् ।
पलितश्मश्रुवृद्धत्वं जीर्णाङ्गं क्व द्विजन्मनः ॥११ ॥

न त्वं योग्या मनुष्यस्य देवेन्द्रदयितोपमे ।
विशेषाज्जीर्णवयसश्च्यवनस्य सुमध्यमे ॥१२ ॥

त्वया विभूषितमिदं वनं सर्वमभूषया ।
कयाचिन्नोपमेया त्वमन्यया तन्वि योषया ॥१३ ॥

गर्हणीयः स शर्यातिः यस्त्वां सर्वाङ्गसुन्दरीम् ।
रूपहीनाय वृद्धाय विततार विलासिनि ॥१४ ॥

त्वां विलोकयतो कापि करुणा समुदेति नौ ।
वृद्धस्य युवतीं भार्यामुद्बुद्धाम्भोजलोचनाम् ॥१५ ॥

विसृज्य च्यवनं वृद्धं गताध्वानममन्मथम् ।
भजैकमावयोर्भीरु यस्ते चित्ताय रोचते ॥१६ ॥

आवां प्रसिद्धौ नासत्यौ भिषजौ नाकवासिनाम् ।
दीर्घाक्षिगुप्तामावाभ्यामन्यस्त्वां नालमीक्षितुम् ॥१७ ॥

न ते भयं पृथुश्रोणि च्यवनादन्यतोऽपि वा ।
एकं लोकोत्तराकारे भजमानं भजावयोः ॥१८ ॥

यदि च्यवनमेव त्वमकाममनुवर्तसे ।
धिक् ते सुन्दरतामेतां वनज्योत्स्नामिवाफलाम् ॥१९ ॥

एतावदुक्त्वा नासत्यौ विजने चारुदर्शनौ ।
उत्तरं सम्प्रतीक्षेते सुकन्यायाः सुयोषितः ॥२० ॥

एवमुक्ता सुरूपाभ्यां सुराभ्यामपि सुव्रता ।
हृदयेनापि सन्मार्गं सुकन्या नात्यलङ्घत ॥२१ ॥

लज्जयावनतं वक्त्रं किञ्चिदुन्नम्य सा सती ।
ईषद्रक्तान्तनयना भर्तृदूषणजक्रुधा ॥२२ ॥

स्वसेव भूयः स्नेहेन वक्तुकामा हितं तयोः ।
धैर्येण रोषं संस्तभ्य शर्यातिदुहिताऽब्रवीत् ॥२३ ॥

अहं न शोचनीयास्मि भवद्भ्यां सुरपुङ्गवौ ।
दत्ता मे देवदेवेन भक्तिर्वृद्धेऽपि भर्तरि ॥२४ ॥

या भक्तिसहिता नारी कान्ते गतवयस्यपि ।
न शोचनीया सा प्राज्ञैर्यत्स्वयं सा न शोचति ॥२५ ॥

या भक्तिरहिता नारी कान्ते नववयस्यपि ।
शोचनीयैव सा प्राज्ञैर्यत्स्वयं सा न शोचति ॥२६ ॥

पत्यौ भक्तिः प्रमोदस्य कारणं कुलयोषिताम् ।
सा स्त्रीणां परमो धर्म इति शास्त्रविदो विदुः ॥२७ ॥

रूपेण भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा रूपेणाधिकं पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥२८ ॥

वयसा भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा नववयसा पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥२९ ॥

विद्यया भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा विद्ययाऽधिकं भर्तुर्दृष्ट्वा व्यभिचरेन्न किम् ॥३० ॥

संपदा भर्तरि प्रीतिं या करोति कुलाङ्गना ।
सा सम्पदाऽधिकं पत्युर्दृष्ट्वा व्यभिचरेन्न किम् ॥३१ ॥

या करोति वधूः प्रीतिं पतित्वादेव भर्तरि ।
पतित्वा भावतोऽन्यस्य सा न स्याद् व्यभिचारिणी ॥३२ ॥

या पतिं प्रमदा हित्वा पुमांसमितरं भजेत् ।
न केवलं तया भर्ता पुमानन्यश्च वञ्चितः ॥३३ ॥

शब्दादयः सुरश्रेष्ठौ विषयालोकवञ्चकाः ।
जयाय नियमस्तेषु पराभूत्यै विपर्ययः ॥३४ ॥

विषयेष्वेव बाह्येषु भावबन्धं करोति यः ।
विषयाणां स बाहुल्यान्न क्वचिन्न लभते स्थितिम् ॥३५ ॥

तादृशस्य मनोभावश्चापलेन प्रतिक्षणम् ।
स्थितिमप्राप्य कुत्रापि नित्यदुःखाय कल्पते ॥३६ ॥

अन्यस्य तरुणीं काङ्क्षेद्यः पुमानल्पदर्शनः ।
तेनात्मनो वधूस्त्यक्ता लभ्यते वेतरा न वा ॥३७ ॥

असतीमितरां लब्ध्वा पण्डितः को नु मोदताम् ।
सा पूर्वमिव भर्तारं किं नात्मानं च मुञ्चति ॥३८ ॥

यस्याः प्रमाणं नो सत्यं नार्या रागान्धचेतसः ।
असतीमल्पविज्ञानः कामुकः श्रद्दधाति ताम् ॥३९ ॥

स तया पुरुषः कामी मन्दश्चञ्चलया स्त्रिया ।
भ्रंशितः प्रथमं धर्मात् स्वयं चान्ते विसृज्यते ॥४० ॥

सत्यं सुरवरो रक्ष्यं स्त्रिया वा पुरुषेण वा ।
तद्रक्षति रक्षति स्वं नैव रक्षत्यरक्षितम् ॥४१ ॥

सत्यानपायिनो रागा यासामुत्तमयोषिताम् ।
तासामुत्तमविद्वांसो विदुर्नामापि पावनम् ॥४२ ॥

उत्सृष्टा जनकेनाहं च्यवनाय महात्मने ।
प्रभुणा तं तु सम्बन्धं नानृतं कर्तुमुत्सहे ॥४३ ॥

भवन्तौ शास्त्रनिष्णातौ देवयोनी विशेषतः ।
निन्द्यं नैतादृशं भावं मनसा कर्तुमर्हतः ॥४४ ॥

यच्चोक्तं मुनिमुद्दिश्य माननीयं तपोनिधिम् ।
तत्र वां चातुरी देवौ तुदतीव मनो मम ॥४५ ॥

येन दग्धः पितुर्वैरी जातमात्रेण दानवः ।
न बिभेतु जनः को वा तस्माच्चण्डदृशो मुनेः ॥४६ ॥

दृष्टप्रभावः स मया ब्रह्मर्षिरमितद्युतिः ।
ज्वलल्लोचनवेधिन्या पूर्वं पाणिनिपीडनात् ॥४७ ॥

नावमान्यः सतां मान्यो भवद्भ्यां च्यवनो मुनिः ।
निर्दहेदपि लोकांस्त्रीन् यदि क्रुद्धः स भार्गवः ॥४८ ॥

सनातनस्य धर्मस्य पालयन्तौ युवां गतिम् ।
अङ्गीकृत्य स्वसारं मां स्वं मार्गं गन्तुमर्हतः ॥४९ ॥

एवं चतुरभाषिण्या प्रत्याख्यातौ सुकन्यया ।
भूयो वचनमब्रूतामाश्विनेयो सुरोत्तमौ ॥५० ॥

प्रधानं यदि कल्याणि धर्ममेवाभिमन्यसे ।
कामादर्थाच्च सुश्रोणि प्रीतौ स्वस्त्ययि भामिनि ॥५१ ॥

भर्तारमभिरूपं ते कर्तास्वो नवयौवनम् ।
सत्येन समयेनाद्य केनापि यदि वाञ्छसि ॥५२ ॥

स चायं समयस्तन्वि युवानं सुन्दरं मुनिम् ।
आवां च समभिप्रेक्ष्य त्रिष्वेकं वृणु वल्लभम् ॥५३ ॥

## पञ्चमोऽध्यायः

अश्विनोस्तमभिप्रायं सुकन्यावरर्णिनी ।
नाथाय कथयामास च्यवनाय महात्मने ॥१ ॥

अङ्गीचकार तत्सर्वं च्यवनो दीर्घदर्शनः ।
अथाश्विनौ समागत्य यथोक्तं कर्तुमुद्यतौ ॥२ ॥

नासत्ययोर्गिरा मौनी विवेश च्यवनः सरः ।
तौ च प्रविष्टौ तदनु स्वर्लोकभिषजावुभौ ॥३ ॥

ततस्तस्मात्सरोमध्यान्निर्गताः पुरुषास्त्रयः ।
तुल्यप्रमाणरूपास्ते सुकन्यायाः पुरोऽभवन् ॥४ ॥

तानालोक्य विशालाक्षी शर्यातिकुलनन्दिनी ।
चिराय चिन्तयामास मम भर्ता क एष्विति ॥५ ॥

ततः शुद्धेन भावेन चिन्तयित्वा नृपात्मजा ।
त्रिष्वेकं पुरुषं वव्रे च्यवनो मुनिरेव यः ॥६ ॥

च्यवनः स्वां प्रियां भूयः प्राप्य हर्षं परं ययौ ।
शीलेन चास्याः संहृष्टौ देववैद्यौ बभूवतुः ॥७ ॥

च्यवनोऽपि प्रसन्नात्मा नासत्याविदमब्रवीत् ।
युवां सर्वेषु यज्ञेषु करिष्ये सोमपायिनौ ॥८ ॥

च्यवनाय कृतं नैव व्यर्थं भवितुमर्हति ।
इतः प्रभृति यज्ञेषु भवतः सोमपायिनौ ॥९ ॥

इत्युक्ता दीर्घतपसा च्यवनेन महात्मना ।
सम्प्रहृष्टौ वाश्विनेयौ स्वकीयं स्थानमीयतुः ॥१० ॥

च्यवनोऽपि महाभागो नवमासाद्य यौवनम् ।
पत्न्या सुकन्यया रेमे दर्शनीयतमाकृतिः ॥११ ॥

पङ्केरुहाकारमुख्या पूर्णचन्द्रनिभाननः ।
वृषभाक्षः कुरङ्गीक्ष्या दीर्घबाहुर्नतभ्रुवा ॥१२ ॥

पीनवक्षाः समोत्तुङ्गघनवक्षोजयुग्मया ।
मधुराधरशालिन्या चारुवाक्यविशारदः ॥१३ ॥

शर्यातिः कुलनन्दिन्या भृगोः कुलविवर्धनः ।
चिरं सुकन्यया रेमे च्यवनोऽङ्गीकृतस्मरः ॥१४ ॥

## षष्ठोऽध्यायः

ततो जामातरं श्रुत्वा सुन्दरं नवयौवनम् ।
समाजगाम तं देशं शर्यातिः पृथिवीपतिः ॥१ ॥

तमागतं महीपालं श्वशुरं च्यवनो मुनिः ।
शास्त्रदृष्टेन विधिना पूजयामास शास्त्रवित् ॥२ ॥

सुकन्यापि सरोजाक्षी लज्जानतमुखाम्बुजा ।
पाणिभ्यां पल्लवाभाभ्यां जग्राह चरणौ पितुः ॥३ ॥

शर्यातिः प्रणतां पुत्रीमाशीर्भिरभिनन्द्यताम् ।
च्यवनेन समं चक्रे जामात्रा विविधाः कथाः ॥४ ॥

ऋषिः कथान्तरे प्राह श्वशुरं भृगुनन्दनः ।
आकर्णयन्त्यां भार्यायां सुकन्यायां सुयोषिति ॥५ ॥

कुरु यज्ञं महीपाल याजकोऽहं भवामि ते ।
नासत्ययोर्मखे भागं स्थापयिष्यामि शाश्वतम् ॥६ ॥

तौ हि मे यौवनं नूत्नं रूपं चातिमनोहरम् ।
ददतुः श्रुतकर्माणौ भिषजौ नाकवासिनाम् ॥७ ॥

सम्प्रदायतयोर्भागं ------------पुरुषतेजसे ।
अनृणो विचरिष्यामि राजन् किं मन्यते भवान् ॥८ ॥

तथेति प्रतिजग्राह शर्यातिर्वचनं मुनेः ।
यागस्ततः प्रववृते देशे बहुतृणोदके ॥९ ॥

तस्मिन् यज्ञे महाभागश्च्यवनो भगवानृषिः ।
ग्रहं जग्राह भागार्धं दस्रयोरुपकारिणोः ॥१० ॥

अपूर्वं भृगुपुत्रेण कल्पितं परमर्षिणा ।
न च क्षमे तयोर्भागं सहस्राक्षः पुरन्दरः ॥११ ॥

दर्शयामास चात्मानं च्यवनाय महात्मने ।
सोऽभ्यसूयमभिप्रेत्य वचनं चेदमब्रवीत् ॥१२ ॥

ऋषे दस्रौ न सोमार्हौ भिषजौ नाकवासिनाम् ।
चिकित्साजीविकौ प्राहुरमीनां हि विपश्चितः ॥१३ ॥

शक्रस्य वचनं श्रुत्वा च्यवनो भगवानृषिः ।
प्रत्युवाच गृहीतं तं अत्यजन्नेव तं ग्रहम् ॥१४ ॥

अभिरूपौ महासत्त्वौ महोत्साहौ महामती ।
अश्विनावर्हतः सोमं यौ मे रूपं वितेरतुः ॥१५ ॥

असकृन्नैवमित्याह देवराजः पुरन्दरः ।
असकृद्देयमित्याह च्यवनो भगवानृषिः ॥१६ ॥

सप्तमोऽध्यायः

पुरुहूतमनादृत्य सर्वदेवगणेश्वरम् ।
सोमं जग्राह दस्रार्थे भगवान् भृगुनन्दनः ॥१ ॥

तमिन्द्रो वारयन्रोषाद्वज्रमादाय दीप्तिमत् ।
प्रहर्तुमुद्यतो विप्रं सोमपाणिमवस्थितम् ॥२ ॥

अथ क्रोधेन हुङ्कारं कृत्वा तेजो निबर्हणम् ।
सवज्रा वज्रिणो बाहुं स्तम्भयामास भार्गवः ॥३ ॥

शक्रस्य स्तम्भयित्वैवं बाहुं शर्याति जापतिः ।
हविषा मन्त्रपूतेन तर्पयामास पावकम् ॥४ ॥

ततोर्धसुहुताद्वह्नेः च्यवनस्य तपोबलात् ।
मदो नाम विनिष्क्रान्तो महाकायो महासुरः ॥५ ॥

तस्य भीषणरूपस्य शरीरं ददृशे बृहत् ।
विष्णोस्त्रिविक्रमस्येव त्रैलोक्यं व्याप्य तिष्ठतः ॥६ ॥

व्यात्तं तीक्ष्णाग्रदशनं लोलजिह्वं भयानकम् ।
वदनं ददृशे तत्र चामुण्डाया इवाननम् ॥७ ॥

महीध्रशिखराकारैः दशनैर्योजनायतैः ।
भीषयन् ग्रसितुं शक्रमभिदुद्राव राक्षसः ॥८ ॥

तं वीक्ष्य राक्षसं घोरं वातापूरितदिङ्मुखम् ।
आपतन्तं महाकायं वासवः समकम्पत ॥९ ॥

अन्तकस्येव घोरस्य मदस्य वशमागतम्।
सुराः शतक्रतुं वीक्ष्य निराशाः सर्वतोऽभवन्॥१०॥

अभयं प्रार्थयामास शक्रोऽथ भयविह्वलः।
च्यवनं मुनिशार्दूलं देवराजः कृताञ्जलिः॥११॥

भागोऽस्तु दस्रयोर्यागे सोमस्य मुनिपुङ्गवः।
क्रियतामुपसंहारो भीषणस्यास्य रक्षसः॥१२॥

एवं सम्प्रार्थितस्तेन रक्षो भीतेन जिष्णुना।
मुमोच च्यवनः क्रोधं सिद्धकामो महातपाः॥१३॥

प्रतिश्रुतेऽश्विनोर्भागे नायकेन दिवौकसाम्।
आत्मानमनृणं मेने च्यवनो भगवान्मुनिः॥१४॥

दुर्जयस्य मदस्यास्य विभूतीनां चतुष्टयम्।
स्त्रियो क्षा मृगया पानमिति शास्त्रविदो विदुः॥१५॥

अपीन्द्रस्य श्रियं हव्यादेतत्त्विति निषेवितम्।
व्यस्तमेव समस्तस्य कः प्राभवमुदीरयेत्॥१६॥

बाहुस्तम्भेन मुक्तोथ रक्षोभीत्या च वासवः।
वर्णयन् भार्गवं ऋषिं जगाम त्रिदशालयम्॥१७॥

सम्प्राप्य सोमभागं च नासतौ हृष्टमानसौ ।
च्यवनं मुनिशार्दूलं श्लाघयामासतुर्मुहुः ॥१८ ॥

समाप्य च्यवनो यज्ञं शर्यातिर्भूरितेजसः ।
कीर्तिं लब्ध्वा च विपुलां कृतार्थो मुमुदे मुनिः ॥१९ ॥

अष्टमोऽध्यायः

एतस्मिन्नेव काले तु कुशिको नाम पार्थिवः ।
पृथिवीं पालयामास धर्मनित्यो महायशाः ॥१ ॥

धर्माभिज्ञस्य धर्मेण सम्यक् पालयतः प्रजाः ।
ब्रह्मलोकेऽप्यगीयन्त गुणास्तस्य महर्षिभिः ॥२ ॥

सभायामेकदा ब्रह्मलोकनाथः कथान्तरे ।
उवाच वचनं तथ्यं कुशिकस्यान्वयं प्रति ॥३ ॥

कुशिकस्यान्वये कश्चित् ब्रह्मयोनिरुदेष्यति ।
ततः प्रभृति तद्वंश्या भविष्यन्ति महीसुराः ॥४ ॥

अन्वये तु भृगोः कोऽपि क्षत्रयोनिरुदेष्यति ।
नैष्ठिकः स च तेजस्वी ब्रह्मचारी भविष्यति ॥५ ॥

स्यातामन्योन्यसङ्कीर्णकुले भार्गवकौशिकौ ।
कारणेन तु केनापि वित्त तापसोत्तमाः ॥६ ॥

एवं कथयतस्तस्य सभायां भारतीपतेः ।
सभामध्यगतः सर्वं शुश्राव च्यवनो मुनिः ॥७ ॥

च्यवनः स ततो भूमिमागत्य सुमहातपाः ।
सर्वर्द्धिसंयुतं रम्यं कुशिकस्य पुरं ययौ ॥८ ॥

स प्रविश्य पुरं रम्यं ब्रह्मर्षिः भृगुनन्दनः ।
समाससाद तेजस्वी राजद्वारं मनोहरम् ॥९ ॥

तं दृष्ट्वा मुनिशार्दूलं ज्वलन्तं विदिताह्वयम् ।
राज्ञे निवेदयामास द्वारपालस्सुविस्मितः ॥१० ॥

राजन् द्वारि स्थितो विप्रो ज्वलन् ब्राह्मणतेजसा ।
कश्चित्परमरम्याङ्गो द्वितीय उडुराडिव ॥११ ॥

दिदृक्षते महाराज स भवन्तं महातपाः ।
द्विजः परमतेजस्वी च्यवनः किल नामतः ॥१२ ॥

वचनं द्वारपालस्य निशम्य कुशिको नृपः ।
विज्ञातसारश्च्यवनं वीक्षितुं स्वयमभ्यगात् ॥१३ ॥

तमृषिं कुशिको राजा प्रत्युद्गम्याभिवाद्य च ।
विधिना शास्त्रदृष्टेन पूजयामास भक्तितः ॥१४ ॥

स पूजितः पार्थिवेन च्यवनो भगवानृषिः ।
शयनं सुखनिद्रायै वव्रे राजनिकेतने ॥१५ ॥

महीपालस्तथेत्युक्त्वा महार्हास्तरणान्वितम् ।
शयनं सुखनिद्रार्थं दर्शयामास मौनिने ॥१६ ॥

च्यवनो मुनिशार्दुलः शय्यां तामभिगत्य सः ।
पादसंवाहनं कर्तुं सभार्यं नृपमादिशत् ॥१७ ॥

यावन्निद्रां करोम्यत्र विश्रान्त्यै राजसत्तम ।
पादसंवाहनं तावत् युवाभ्यां क्रियतामिति ॥१८ ॥

स च राजा तथेत्युक्त्वा सभार्यः प्रीतिमानसः ।
कर्तव्यमखिलं त्यक्त्वा निषेवे निद्रितं मुनिम् ॥१९ ॥

च्यवनोऽपि बहून् मासान् निद्रामेव निषेवत ।
स्वं योगबलमास्थाय परेषां विस्मयावहम् ॥२० ॥

अविषण्णेन मनसा तौ च क्षत्रियदम्पती ।
क्षुधातृष्णादिकं जित्वा प्रसादात् परमेष्ठिनः ॥२१ ॥

चक्रतुः पादशुश्रूषां निद्राणस्य महामुनेः ।
स्वं भक्तिबलमास्थाय परेषां विस्मयावहम् ॥२२ ॥

अथ दीर्घेण कालेन शयनादुत्थितो मुनिः ।
अब्रवीत् कुशिकं दृष्ट्वा सभार्यमकुतोभयः ॥२३ ॥

अभिलाषो ममास्त्यन्यः तं राजन् कर्तुमर्हति ।
अद्यैव मा वाहयतु रथमारोप्य दम्पती ॥२४ ॥

युवाभ्यामेव बाहुभ्यां युक्तं स्यन्दनमास्थितः ।
पुरं प्रदक्षिणं कर्तुमिच्छामि पृथिवीपते ॥२५ ॥

स च राजा तथेत्युक्त्वा सभार्यो विगतज्वरः ।
च्यवनं रथमारोप्य पुरं चक्रे प्रदक्षिणम् ॥२६ ॥

तौ दृष्ट्वा वाहनीभूतौ सुकुमारकलेबरौ ।
राजानं राजपत्नी च जज्ञे नगरमाकुलम् ॥२७ ॥

उपवासकृशैरङ्गैः कथंचिद्विभ्रतौ रथम् ।
ताड्यमानौ च मुनिना कशया निर्दयं मुहुः ॥२८ ॥

शोणितोक्षित सर्वाङ्गौ शुष्कास्यौ कीर्णमूर्धजौ ।
राजानं राजपत्नीं च दृष्ट्वा प्रव्यथितं पुरम् ॥२९ ॥

उपवासः कशाघाता अवमानं च पट्टणे ।
न तयोः काममपि रुजां अन्तरङ्गस्य चक्रिरे ॥३० ॥

सुतरां बाध्यमानोऽपि न राजा व्यथितो यदा ।
मृदङ्गी राजपत्नी वा तुष्टो भृगुसुतस्तथा ॥३१ ॥

## नवमोऽध्यायः

ततो भृगुसुतस्तुष्टो राजानं निश्चलान्तरम् ।
प्रीतिपेशलया वाचा सान्त्वयन्निदमब्रवीत् ॥१ ॥

प्रीतोऽस्मिते नृपश्रेष्ठ भक्तियुक्तेन कर्मणा ।
तादृशं शमसंयुक्तं न पश्यामि जगत्त्रये ॥२ ॥

सभायामेकदा ब्रह्मलोकनाथः कथान्तरे ।
उवाच वचनं तथ्यं तव राजन् कुलं प्रति ॥३ ॥

कुशिकस्यान्वये कश्चित् ब्रह्मयोनिरुदेष्यति ।
ततः प्रभृति तद्वंश्या भाविनो ब्राह्मणा इति ॥४ ॥

अन्यच्चोक्तं भगवता ब्रह्मणा परमेष्ठिना ।
अस्माकं वंशमुद्दिश्य भूपते दीर्घदर्शिना ॥५ ॥

अन्वये तु भृगोः कोऽपि क्षत्रयोनिरुदेष्यति ।
नैष्ठिकः स च तेजस्वी ब्रह्मचारी भवेदिति ॥६ ॥

परस्परं च सङ्कीर्णे कुले भार्गवकौशिके ।
स्यातामिति विरिञ्चेन कारणं च समीरितम् ॥७ ॥

ब्रह्मणो वचनं श्रुत्वा कुलसङ्करसङ्क्षयम् ।
राजन्नक्षममाणस्य क्रोधोऽभून्मे कुले तव ॥८ ॥

तदैवाहं समायातो भूलोकं भूमिनायक ।
सर्वर्द्धिसंयुतं रम्यं प्राविशं पट्टणं तव ॥९ ॥

संशोधितश्च बहुधा मया त्वं राजसत्तम ।
किञ्चिदन्तरमासाद्य दग्धुकामेन ते कुलम् ॥१० ॥

सूक्ष्ममप्यवनीपाल तव नापश्यमन्तरम् ।
गृहिण्यौ वा त्वदीयायाः कृपामाविशत्ततः ॥११ ॥

ईदृशस्य गुणाढ्यस्य कुलेन सह मे कुलम् ।
यदि सङ्किर्णतां याति विषादस्तत्र नास्ति मे ॥१२ ॥

अयि क्षत्रियदायाद तव वंशे भविष्यति ।
ब्रह्मयोनिर्मुनिः कोऽपि ब्रह्मणो वचनं यथा ॥१३ ॥

राजान्ववायजातोऽपि ब्राह्मणत्वं सुदुर्लभम् ।
तपो बलेन सम्प्राप्य वंशं ते पावयिष्यति ॥१४ ॥

वरं वृणु महीपाल यं यं कामयसेऽनघ ।
मम प्रसादात्त्वं सद्यो मनोरथमवाप्स्यसि ॥१५ ॥

## दशमोऽध्यायः

च्यवनेनैव ऋषिणा भाषितो कुशिको नृपः ।
मेने कृतार्थमात्मानं वचनं चेदमब्रवीत् ॥१ ॥

भगवन्यदि तुष्टोऽसि भणामि मम वाञ्छितम् ।
हृदि स्थितं बहो कालात् तन्निशम्य कुरुचितम् ॥२ ॥

कीदृशो नाकिनां लोकः कीदृशं तत्र वैभवम् ।
अनेनैव शरीरेण द्रष्टुमिच्छामि सुव्रत ॥३ ॥

कुशिकस्य वचः श्रुत्वा दिदृक्षोर्नाकिनं जगत् ।
इदं सुलभमित्याह च्यवनो भगवानृषिः ॥४ ॥

राजेन्द्र द्रक्ष्यसि स्वर्गं मया याहि सहानघ ।
योगस्याद्भुतवीर्यस्य दर्शयामि बलं मम ॥५ ॥

ततोऽमूसहितौ कश्चित् विविक्तं देशमीयतुः ।
ऋषिश्च भृगुदायादः स च राजशिरोमणिः ॥६ ।

दिव्यं चक्षुर्ददौ राज्ञे तत्र तापसपुङ्गवः ।
यथास्य लोचनपथं स्वर्गः सर्वोऽपि यास्यति ॥७ ॥

अथापश्यन् महीपालो नाकलोकं मनोहरम् ।
जयन्ति कर्मभिः पुण्यैः यं भूलोकनिवासिनः ॥८ ॥

विषयं नेत्रयोस्तस्य जगाहे पाकशासनः ।
पूर्वं सिंहासनासीनः सर्वदेवगणेश्वरः ॥९ ॥

श्रिया परमया युक्तः सहस्राक्षः पुरन्दरः ।
उपास्यमानः पौलोम्या फुल्लपङ्कजवक्त्रया ॥१० ॥

तत्रैव कुशिकोऽपश्यत् जयन्तं पाकशासनिम् ।
कन्दर्पमिव साकारं नाकनारीविमोहनम् ॥११ ॥

तत्रैव च सभामध्ये समासीनमलोकत ।
राजा वाचस्पतिं जीवं निर्जराणां पुरोधसम् ॥१२ ॥

धरो ध्रुवश्च सोमश्च वासरश्चानिलोऽनलः ।
प्रत्यूषश्च --- त्यष्टौ कनककुण्डलः ॥१३ ॥

अरजोम्बरसंवीता रूपद्रविणवत्तराः ।
वीक्षिता वसवस्तत्र कुशिकेन महाभुजा ॥१४ ॥

महाहूहूचित्ररथाश्चित्रसेनश्च विश्रुतः ।
तुम्बुरुप्रमुखाश्चान्ये गन्धर्वा देवगायकाः ॥१५ ॥

गायन्तो विविधं गीतं श्रवणेन्द्रियतर्पणम् ।
बहवो वीक्षितास्तत्र विस्मितेन धराभुजाः ॥१६ ॥

उर्वशी मेनका रम्भा धृताची च तिलोत्तमा ।
सुकेशी मञ्जुघोषा च चित्रलेखा च भामिनी ॥१७ ॥

अन्याश्च शतशस्तत्र समृष्टा मणिकुण्डलाः ।
दिव्यकौशेयधारिण्यो दिव्यभूषणभूषिताः ॥१८ ॥

मानसानि वशीकर्तुं मुनीनामपि च क्षमाः ।
चरन्त्यः प्राणसहिताः स्वर्णपाञ्चालिका इव ॥१९ ॥

रूपौदार्यगुणोपेता जरावैकृतवर्जिताः ।
वीणा इव मनोहारिस्वरतर्पितचेतनाः ॥२० ॥

वक्रालकाश्चञ्चलाक्ष्यो घनपीनपयोधराः ।
फलभूता व्यलोक्यन्त पुण्यानां पृथिवीभुजा ॥२१ ॥

अथ प्रसारयन् दृष्टिं अन्यतः कुशिको नृपः ।
वैमानिकान्पुण्यकृतो ददर्श प्रियदर्शनान् ॥२२ ॥

चुम्बन्तं दयितामेकं कपोले दर्पणामले ।
पिबन्तमपरं कान्तामधरे पल्लवारुणे ॥२३ ॥

लिखन्तं तरुणीमन्यं ऊरू उन्मादने मुहुः ।
श्लिष्यन्तमितरं रामां कङ्ठे कम्बुमनोहरे ॥२४ ॥

अथ प्रसारयन् दृष्टिं अन्यतः कुशिको नृपः ।
सरांसि रमणीयानि हेमपद्मान्यलोकत ॥२५ ॥

राजा लुलोके तत्रापि क्रीडतः पुण्यशालिनः ।
अप्सरोभिः पृथुश्रोणिवक्षोजाभिः समन्ततः ॥२६ ॥

दर्शं दर्शं नृपस्तत्र विवृताहरिणीदृशः ।
जलक्रीडासमासक्ताः प्रभुचेतसः---- ॥२७ ॥

अथ प्रसारयन् दृष्टिं अन्यतः कुशिको नृपः ।
उद्यानानि मनोज्ञानि पुष्पितानि व्यलोकत ॥२८ ॥

राजा लुलोके तत्रापि खेलतः पुण्यशालिनः ।
अप्सरोभिर्घनश्यामचिकुराभिस्समन्ततः ॥२९ ॥

कुसुमापचयव्यक्षैः कुसुमादपि कोमलैः ।
करैर्नृपो भ्राजमामा ददर्श मृगलोचनाः ॥३० ॥

मन्दारकुसुमस्रग्भिः बिभ्रतीर्भूषितास्तनूः ।
सोऽपश्यत्तत्र तन्वङ्गीः पुष्पिता लतिका इव ॥३१ ॥

आयुधागारसदृशे वने तत्र मनोभुवः ।
नियुक्ता इव रक्षार्थं राजा पश्यत्सुराङ्गनाः ॥३२ ॥

अथ प्रसारयन् दृष्टिमन्यतः कुशिको नृपः ।
हर्म्याणि रमणीयानि वीक्षां चक्रे समन्ततः ॥३३ ॥

राजा लुलोके तत्रापि दम्पतीन् प्रियदर्शनान् ।
नानाभोगसमायुक्तान् नित्यानन्दसमन्वितान् ॥३४ ॥

तेषां निर्माणचातुर्यं गृहाणां बहुधा नृपः ।
बहुधा श्लाघयामास नवरत्नौघशोभिनाम् ॥३५ ॥

इन्द्रनीलकवाटैश्च स्वच्छमुक्तावितानकैः ।
वज्रनिर्मितकुड्यैश्च स्फाटिकाङ्गणभूमिभिः ॥३६ ॥

सरोजरागपर्यङ्कैः वैडूर्यवलभीशतैः ।
विद्रुमस्तं भशतकैः सगोमे वेदिभिः ॥३७ ॥

गारुत्मतासनैश्चापि युक्तां दृष्ट्वा गृहावलीम्।
भूमिलोकाच्छतगुणं स्वर्गं --------- ॥३८॥

अथ प्रसारयन् दृष्टिमन्यतः कुशिको नृपः।
ददर्श पुण्यसलिलां दिव्यां मन्दाकिनीं नदीम्॥३९॥

राजा लुलोके तत्रापि देवर्षीन् स्नातुमागतान्।
अक्षमालालसत्पाणींत्स्नातानन्यांश्च तापसान्॥४०॥

क्रीडन्ति तत्र गङ्गायां मिथुनानि व्यलोकत।
स राजा राजहंसानां चन्द्रिकाधवलत्विषाम्॥४१॥

प्रवालारुणचञ्चूनां मधुरं कूजतां मुहुः।
परस्परानुरक्तानां सम्बद्धानां परस्परम्॥४२॥

तानि दृष्ट्वा विहङ्गानां द्वन्द्वानि पृथिवीपतिः।
स्वर्गं च विहङ्गं धन्यं मेने भूमिगतान्नरात्॥४३॥

अथ प्रसारयन् दृष्टिं अन्यतः कुशिको नृपः।
ख्यातमैरावतं नाम गजराजमलोकत ॥४४॥

श्वेतप्रभं चतुर्दन्तं कैलासशिखराकृतिम्।
दृष्ट्वा तमधिकं मेने देवराजस्य वैभवम्॥४५॥

अथ प्रसारयन् दृष्टिं अन्यतः कुशिको नृपः ।
प्रसिद्धमुच्चैश्रवसं वाजिराजमलोकत ॥४६ ॥

मन्दर ------------------------ ।
दर्शं दर्शं स तं राजा तर्पयामास चक्षुषी ॥४७ ॥

अथ प्रसारयन् दृष्टिमन्यतः कुशिको नृपः ।
सर्वकामदुहं भद्रां देवधेनुमलोकत ॥४८ ॥

---------------------------- ।
ववन्दे मनसा राजा सुरभिं तां सुपर्वणाम् ॥४९ ॥

अथ प्रसारयन् दृष्टिमन्यतः कुशिको नृपः ।
आधारमर्थिलोकस्य कल्पवृक्षमलोकत ॥५० ॥

कस्मैचित्सुकुमाराणि सुगन्धीनि शुचीनि च ।
शिरस्संवासयोग्यानि निजानि कुसुमान्यपि ॥५१ ॥

तं विलोक्य महोदारं कल्पवृक्षं महीपतिः ।
समुद्रं कृतिनं मेने स यस्य किल सन्ततिः ॥५२ ॥

अथ प्रसारयन् दृष्टिमन्यतः कुशिको नृपः ।
गणान् ददर्श देवानां लीलया चरतोम्बरे ॥५३ ॥

एवमेतादृगन्यच्च ददर्श बहु पार्थिवः ।
महता योगवीर्येण च्यवनस्य महामुनेः ॥५४ ॥

यथा व्यजानाच्चयवनो भगवान् भृगुनन्दनः ।
स्वर्गस्य दर्शने तृप्तं कुशिकं राजसत्तमम् ॥५५ ॥

तस्य चक्षुस्तथा दिव्यमुपसंहृतवान् ऋषिः ।
तमेव देशमद्राक्षीत् स विविक्तं जनाधिपः ॥५६ ॥

विस्मितः स ततो राजा प्रत्यक्षं नाकदर्शनात् ।
ब्रह्मर्षिं पूजयांचक्रे मनोवाक्कायकर्मभिः ॥५७ ॥

स एवं च्यवनो विद्वान् अनु ---------नृपोत्तमम् ।
स्वस्त्यस्तु तुभ्यमित्युक्त्वा स्वच्छन्दगमनो ययौ ॥५८ ॥

कुशिको भूपतिस्सोऽपि विस्मितेनान्तरात्मना ।
महर्षेः श्लाघयन् योगं स्वकीयं नगरं ययौ ॥५९ ॥

## एकादशोऽध्यायः

सुकन्या च्यवनात् पुत्रं प्रमतिं समजीजनत् ।
तृतीयमिव नासत्यं रूपौदार्यगुणान्वितम् ॥१ ॥

घृताची नाम या प्रोक्ता नाकलोकेवराप्सराः ।
द्वितीयां प्रमतिर्लेभे सुन्दरीं तामनिन्दिताम् ॥२ ॥

तस्य पुत्राश्च पौत्राश्च बभूवुर्बहवोऽनघाः ।
प्रमद्वराया दयितः प्रोक्तो येषां रुरुर्मुखम् ॥३ ॥

अनुमान्य प्रियां भार्यां सुकन्यां च्यवनो मुनिः ।
उपयेमे परां कन्यामारुषीं नाम मानवीम् ॥४ ॥

सुकन्यया युतो विद्वान् आरुष्या च भृगोः सुतः ।
चिरञ्जीवी चिरं रेमे महायोगी महायशाः ॥५ ॥

ताभ्यां विहरतस्तस्य भार्याभ्यां दीप्ततेजसः ।
महीयानगमत्कालो न चाक्षीयत यौवनम् ॥६ ॥

भार्ययोश्च यो नूत्नं न ------- द्वयोर्वयः ।
महर्षेर्योगवीर्येण च्यवनस्य महात्मनः ॥७ ॥

च्यवनस्य तु ये पौत्राः तेषां पुत्रा च विश्रुताः ।
----- पुत्रैरवर्धन्त शतशश्च सहस्रशः ॥८ ॥

च्यवनात् भयतो मृत्युः सर्वांस्तान्किल नास्पृशत् ।
आविवेशाथ तान् गर्वो ब्राह्मणान् दीर्घजीविनः ॥९ ॥

ते समेत्य महाभागा भृगवो दीर्घजीविनः ।
अभिजग्मुर्महात्मानं भृगोस्तनयमेकदा ॥१० ॥

तानागतान् समालोक्य समेतानात्मवंशजान् ।
स्वागतेनाभिनन्द्याह च्यवनो भगवानृषिः ॥११ ॥

पुत्रका हेतुनाकेन समेता मामुपस्थिताः ।
तद्ब्रूत श्रोतुमिच्छामि युष्माकं यन्मनोगतम् ॥१२ ॥

वचनं भृगुपुत्रस्य निशम्य भृगवोऽब्रुवन् ।
महर्षिं तं ज्वलन्नेत्रं सहिताः कालचोदिताः ॥१३ ॥

कारणं किं न जानीमो दीर्घे ---- गलत्यपि ।
मृत्युर्नैव स्पृशत्यस्मान्भारभूतानिमान् भुवः ॥१४ ॥

कियन्तं च पुनः कालं ब्रूहि तात ध्रियामहे ।
जुगुप्सा जीवितेऽस्माकं जाता ब्रह्मविदां वर ॥१५ ॥

अन्तकालं तदाख्याहि पुत्राणां तात पृच्छताम् ।
हित्वेमानि शरीराणि लभेम परमं पदम् ॥१६ ॥

तान् तथा ब्रुवतो दृष्ट्वा महर्षिः कालचोदितान् ।
उवाच च्यवनस्तथ्यं वज्रपातनिभं वचः ॥१७ ॥

मत्तो भयेन वो मृत्युः नास्पृशन्ननु पुत्रकाः ।
अहमच्छं कुले जातांत्सर्वांश्च चिरजीविनः ॥१८ ॥

सर्वभूतसमो देवो ब्रह्म तच्च न चक्षमे ।
स हि प्रजापतिः प्राह जातस्य मरणं ध्रुवम् ॥१९ ॥

यो मे बभूव सङ्कल्पः क्षेमकृत् कुलजान् प्रति ।
तस्य विघ्नमिदं प्राप्तं विधेरतिबलीयसः ॥२० ॥

यूयं तु बुद्धिदौर्बल्यात् भावित्वादपि पुत्रकाः ।
मरणं प्रार्थयध्वं हा तच्च प्राप्स्यथ माचिरम् ॥२१ ॥

सङ्कल्पो न च मे भावी मोघो विघ्नशतैरपि ।
तस्मात् कोऽपि कुले जातः चिरञ्जीवी भवेन्मम ॥२२ ॥

पुत्राः सर्वेषु युष्मासु मृतेषु स्वर्गगामिषु ।
आरुष्यास्तनयोऽमुष्याः कश्चित् वंशाय तिष्ठति ॥२३ ॥

एतावदुक्त्वा च्यवनो वंशजान् भगवान् ऋषिः ।
आरुषीं दयितां वीक्ष्य दीर्घदर्शीदमब्रवीत् ॥२४ ॥

निबोधारुषि मे वाक्यं यत्त्वां वक्ष्यामि भामिनीम् ।
अहितं त्वयि मे तेजो भृगुवंशाय तिष्ठति ॥२५ ॥

इतः प्रभृति भूलोके नाहं वर्ते वरानने ।
मम मा मरणाशाभूत् कदाचित् भूमिवासिनः ॥२६ ॥

सुवर्लोके विचरतो द्वितीया मे भवति---------- ।
सुकन्या योषितां श्रेष्ठा या मां वृद्धं च नाक्षिपत् ॥२७ ॥

इत्याभाष्यारुषीं भार्यां विसृज्य कुलजानपि ।
------------------------ ॥२८ ॥

सुकन्या च्यवनौ सिद्धावधुनापि त्रिविष्टपे ।
रमेते योगसंयुक्तौ पूज्यमानौ सुपर्वभिः ॥२९ ॥

## द्वादशोऽध्यायः

तस्मिन् काले महीपालो हैहयो नामनामतः ।
------- भृगूणां महोदारो महायशाः ॥१ ॥

सवित्रैस्तर्पयामास भृगून्द्रविणवन्तरः ।
जज्ञिरे तेन भृगवो धनवन्तः समन्ततः ॥२ ॥

हैहये त्रिदिवं याते तस्य पुत्रो --------- ।
यस्य पौत्राश्च पौत्राश्च शतशो वीर्यदर्पिताः ॥३ ॥

तेषां काले न पर्जन्यो ववर्ष पृथिवीतले ।
दुर्भिक्षपीडितास्तेन बभूवुः सकलाः प्रजाः ॥४ ॥

हैहयाश्च तदा कोशे सर्वतः प्रक्षयं गते ।
संसदा मन्त्रयामासुः द्रविणस्यागमं प्रति ॥५ ॥

तेष्वेकः क्षत्रियः सर्वान् अन्यानालोक्य नीतिवित् ।
कालोचितमिदं वाक्यं बभाषे तत्र संसदि ॥६ ॥

याजका भृगवोऽस्माकं श्रूयन्ते धनवत्तराः ।
तेषां समीपं गत्वाद्य वयं भिक्षामहे धनम् ॥७ ॥

अस्माकमेव तद्वित्तं यद्भृगुष्वधिकं स्थितम् ।
हैहयः परमोदारः तेभ्यः सम्प्रददौ हि तत् ॥८ ॥

ते कार्यकाले राज्यानां प्रक्षीणिसर्वतोऽर्थः ।
कृतज्ञाभृगवो वित्तं दास्यन्तीति मतिर्मम ॥९ ॥

तस्य तत्पूजयामासुर्वचनं सर्व एव ते ।
सहिताश्च ततो जग्मुः भृगवो यत्र संस्थिताः ॥१० ॥

समागतांस्तान् विज्ञाय क्षत्रियान् वित्तकामिनः ।
धरण्यां निदधुः सर्वं भृगवो द्रविणं तदा ॥११ ॥

तथैव भवितव्यत्वात् वाक्येन च्यवनस्य च ।
भृगूनभ्यभवल्लोभः कालोपहतचेतसः ॥१२ ॥

ततो ययाचिरे वित्तं क्षत्रिया हैहया भृगून् ।
नेति नेत्यब्रुवंत्सर्वे भृगवो लोभदूषिताः ॥१३ ॥

अथ केनापि विज्ञातं भूमौ तैर्निहितं धनम् ।
अन्येभ्यः कथयामास न च तद्वाहुसम्भवः ॥१४ ॥

अथोपलभ्यते सर्वे शोधयित्वा धनं भुवि ।
हन्तुमारेभिरे क्रोधात् भृगूननृतवादिनः ॥१५ ॥

ते क्षत्रियाः प्रतिज्ञाय क्रुद्धा भृगुकुलक्षयम् ।
घ्नन्तः करुणया हीना विचेरुः सर्वतो महीम् ॥१६ ॥

यूनो वृद्धांश्च बालांश्च गर्भावपिरुषान्विताः ।
क्षत्रियाः समवाकृन्तन् भृगूणां क्रोधमूर्च्छिताः ॥१७ ॥

---------- भृगुक्षत्रियैस्तदा ---------- ।
भृगुपत्न्यस्तु गर्भिण्यो गिरिन् भेजुः भयाकुलाः ॥१८ ॥

तत्रापि ताः कृपाहीना ज्वलितायुधपाणयः ।
क्षत्रिया अनुधावन्तश्चक्रुर्गर्भविकृन्तनम् ॥१९ ॥

अथ हैमवतीदुर्गे चरन्तः क्षत्रियो वने ।
ददृशुः गर्भिणीं काञ्चित् भ्राजमानां स्व तेजसा ॥२० ॥

सा बिभ्रती वरं गर्भं च्यवनस्यारुषी वधूः ।
सपत्नान् भृगुवंशस्य क्षत्रियांत्समुदैक्षत ॥२१ ॥

तेभ्यः सा सुदती भीता क्षत्रियेऽभ्यस्तपस्विनी ।
गर्भिणी मृगशाबाक्षी नापश्यच्छरणं यदा ॥२२ ॥

तदा तस्यास्तु गर्भस्थो बालको निर्गतो बहिः ।
दुराधर्षो महातेजा द्वितीय इव पावकः ॥२३ ॥

मातुर्भयापनोदाय गर्भच्छेदाय च द्विषाम् ।
सर्वलोकप्रसिद्धस्य भृगोश्च कुलवृद्धये ॥२४ ॥

त्रयोदशोऽध्यायः

स जातमात्रस्तेजस्वी दृशा च्यवननन्दनः ।
क्षत्रियान् भृगुवंशारीन् प्रज्वलन्त्या व्यलोकत ॥१ ॥

लोकितास्तेन बालेन च्यवनस्य तनूभुवा ।
बभूवुः क्षत्रियाः सर्वे कानने नष्टदृष्टयः ॥२ ॥

ततस्ते पूर्वदृष्टां तां विप्रनारीं ययाचिरे।
दृष्टिं भग्नमदास्सर्वे कर्मणो----- ॥३॥

सा च प्राह न मे शक्तिः काचिदस्तीह बाहुजाः।
सर्वं मदात्मजातेन बालेन कृतमद्भुतम् ॥४॥

महर्षेश्च्यवनस्यायं पुत्रो विख्यातकर्मणः।
कुलध्वंसभवात् क्रोधात् नष्टदृष्टींश्चकार वः ॥५॥

अवाप्तुं वः पुनर्दृष्टिं क्षत्रिया यदि वाञ्छितम्।
याचध्वमिममत्युग्रतेजसं मम पुत्रकम् ॥६॥

एवं तयोक्ताः सर्वे ते भग्नदर्पा विचेतसः।
च्यावनिं प्रार्थयामासुर्दृष्टिं वाचा च दीनया ॥७॥

स बालो याचमानेभ्यः तेभ्यो दत्त्वा दृशं पुनः।
मातुर्मते च कारोग्रं तपस्तत्रैव पर्वते ॥८॥

चित्रवृत्तिर्विचित्रास्य समर्थस्य मुनेरभूत्।
सामरानपि लोकांस्त्रीन् दहेथमिति कोपिनः ॥९॥

स उद्देशेन तेनैव तपस्तेपे सुदारुणम्।
तं पिता वारयामास च्यवनस्तत उद्यमात् ॥१०॥

वने हैमवतीदुर्गे चरन्तं दारुणं तपः ।
पुत्रमौर्वमुपागत्य च्यवनो वाक्यमब्रवीत् ॥११ ॥

और्व ते तपसोग्रेण पुत्र मे विस्मितं मनः ।
सामरानपि लोकांस्त्रीन् दहेयमिति कोपिनः ॥१२ ॥

पुत्र कोपस्त्वया त्याज्यः सर्वभूतक्षयावहः ।
विप्रः सन्नेदृशं कर्म दारुणं कर्तुमर्हसि ॥१३ ॥

सर्गे क्षये च भूतानां कालो हि विधिनोदितः ।
विधेर्विरुद्धं शक्तो विकर्तुं शक्नोति नो जनः ॥१४ ॥

मया तात कुले जाताँत्सर्वान् च चिरजीविनः ।
कर्तुं कामयमानेन घोरमाचरितं तपः ॥१५ ॥

तपसो मे बलान्मृत्युर्नास्पृशत्कुलजान्मम ।
सर्वभूतसमो देवो ब्रह्म तच्च न चक्षमे ॥१६ ॥

अथ केनापि कालेन बन्धवस्ते गतायुषः ।
मामेव प्रार्थयामासुर्मरणं कालचोदिताः ॥१७ ॥

अहं च ब्रह्मणो भावं विज्ञाय परमेष्ठिनः ।
व्यादिशं मरणं तेषां कस्मिंश्चित् कारणान्तरे ॥१८ ॥

एवं ते बन्धवः सर्वे प्राप्तामरणमिच्छया ।
निमित्तमात्रमभवन् क्षत्रियाः क्षुद्रबुद्धयः ॥१९ ॥

क ईशते भृगूर्हर्तुं तपोराशीननिच्छतः ।
बिभीति येभ्यो मृत्युश्च विना तं परमेष्ठिनम् ॥२० ॥

वन्धुनाशभवं शोकं जहि कापुरुषोचितम् ।
स जातस्य ध्रुवो मृत्युरिति शास्त्रविदो विदुः ॥२१ ॥

पितुर्वचनमाकर्ण्य च्यवनस्य महामुनेः ।
आरुषी तनयो वाक्यमुवाच दृढनिश्चयः ॥२२ ॥

तात त्रैलोक्यसंहारान्न मे बुद्धिर्निवर्तते ।
कृतां प्रतिज्ञां चित्तेन मिथ्या कर्तुमुत्सहे ॥२३ ॥

अहं समर्थस्त्रैलोक्य संहर्तुं सचराचरम् ।
बलात्तपस उग्रस्य तत्र मे नास्ति संशयः ॥२४ ॥

बन्धुनाशभवो नैव शोको मे वर्तते हृदि ।
पापोपेक्षां समर्थानां दृष्ट्वा क्रोधो भवन्मतम् ॥२५ ॥

देहिनो नयनच्छद्मः कुर्वाणा नसतीः क्रियाः ।
ईशस्यंशोऽपि पापात्मा गणनीयो मतं मम ॥२६ ॥

प्रवृत्ताः क्षत्रियास्तीव्रं कर्तुं कार्यं यदाभवत्।
न तेषां वारणं चक्रुः कुत इन्द्रादयस्सुराः ॥२७ ॥

स वा प्रजापतिर्ब्रह्मा यं ब्रूषे परमेष्ठिनम्।
तेन महर्षयः सर्वे ये भूतकरुणान्विताः ॥२८ ॥

तातास्मादहं मन्ये पापाकुलमिदं जगत्।
धर्मोनित्यो न कोऽप्यस्ति किं मना मन्यते भवान् ॥२९ ॥

यदाहं भृगुवंश्यानां बालकानामपि क्षयम्।
क्रियमाणमधर्मेण श्रूयमाणं च दारुणम् ॥३० ॥

व्यजानामीश्वरैः सद्भिरमरैः समुपेक्षितम्।
महर्षिभिस्तथान्यैश्च तदा मां कोप आविशत् ॥३१ ॥

न मे क्रोधः सदीप्तस्य क्षत्रियापशदा अलम्।
सामरानपिलोकांस्त्रीन् दहेयमिति मे मतिः ॥३२ ॥

क्षत्रियेषु न मे क्रोधो लोभोपहतबुद्धिषु।
--------धर्मज्ञेषु ज्वलत्यसौ ॥३३ ॥

एवमुक्त्वा स पितरं कुमारो दृढनिश्चयः।
मतिं त्रैलोक्यसंहारान्न न्यवर्तयत क्रुधा ॥३४ ॥

तत्तस्य हेतुसंयुक्तं वाक्यमाकर्ण्य कोपिनः ।
सान्त्वयन्नब्रवीद्वाक्यं च्यवनो दीर्घदर्शनः ॥३५ ॥

उपपन्नमिदं सर्वं त्वयि पुत्रोग्रतेजसि ।
सामरानपि लोकांस्त्रीन् दग्धुं शक्तस्त्वमोजसा ॥३६ ॥

नैष संहारसमयो लोकानां प्रियनन्दन ।
क्रोधादस्मान्निवर्तस्व भूय उद्धर नः कुलम् ॥३७ ॥

सर्वे रसमयालोका रसश्चाप्सु प्रतिष्ठिताः ।
तस्मादप्सु जहीहीमं क्रोधं लोकक्षयोद्यतम् ॥३८ ॥

तथा प्रतिज्ञा सत्या ते प्रियपुत्र भविष्यति ।
अनामयं च लोकानां अशेषाणां भविष्यति ॥३९ ॥

धर्मनित्याश्च शक्ताश्च सर्व ---- नाकवासिनः ।
बलित्वाद्भवितव्यस्य पापं नैव न्यवारयन् ॥४० ॥

एतेन हेतुना तात धर्मशीलाननागसः ।
अमरांश्च महर्षिंश्च न प्रदग्धुं त्वमर्हसि ॥४१ ॥

च्यवनस्य वचः श्रुत्वा पितुः कालोचितं वचम् ।
मतिं त्रैलोक्यसंहारे जहवौर्वः कथंचन ॥४२ ॥

विजहायात्मनः क्रोधं लोकक्षयोद्यतं --- ।
पितुर्वचनमादृत्य समुक्षेपुर्महातपाः ॥४३ ॥

प्रज्वलन्नितरां वह्निः स भूत्वा बडबामुखः ।
अद्यापि च्यावनेः क्रोधः समुद्रस्य पिबत्यपः ॥४४ ॥

## चतुर्दशोऽध्यायः

ऋचीकं तनयं प्राहुरौर्वस्य तपसां निधिम् ।
धर्मज्ञं सत्यसन्धं च सर्वभूतशिवंकरम् ॥१ ॥

स ऋचीको महाबुद्धिर्व्रतस्नातो महातपाः ।
अधीतसर्वनिगमो विवाहायाकरोन्मनः ॥२ ।

कुशिकस्यात्मजो यस्तु ख्यातस्य पृथिवीपतेः ।
पुरन्दरांशजनितो गाधी सत्यपराक्रमः ॥३ ॥

बभूव कन्यका तस्य नाम्ना सत्यवती शुभा ।
सर्वलक्षणसंपन्ना रूपेणाप्सरसा समा ॥४ ॥

तां वव्रे भार्गवो भार्यां ऋचीकस्तपसां निधिः ।
गाधिनः पृथिवीशस्य धर्मज्ञस्यान्तिकं गतः ॥५ ॥

अथ गाधी जगादेदमृचीकमृषिकुञ्जरम् ।
अस्ति मे समयः कश्चित् कन्यां सत्यवतीं प्रति ॥६ ॥

सहस्रं श्यामकर्णानां हयानां पाण्डुवर्चसाम् ।
उपाहरति यः शुल्कं तस्मै सेयं प्रदीयते ॥७ ॥

ऋचीकोऽपि प्रतिज्ञाय तं शुल्कं पृथिवीभुजे ।
देवमाराधयामास पातालभुवनेश्वरम् ॥८ ॥

स प्रीतो वरुणस्तस्मै दर्शयित्वा निजं वपुः ।
अभीष्टं वरयेत्याह वरं वव्रे च भार्गवः ॥९ ॥

एकतः श्यामकर्णानं हयानां पाण्डुवर्चसाम् ।
सहस्रं दीयतां मह्यं तुष्टोऽसि भगवन्यदि ॥१० ॥

वरुणश्च तथेत्युक्त्वा ऋचीकाय हयान् ददौ ।
श्यामकर्णान्वायुजवांत्सहस्रं पाण्डुवर्चसाम् ॥११ ॥

उपाजहार तं शुल्कं भार्गवः पृथिवीभुजे ।
गाधिने धर्मनिष्ठाय कुशिकस्य तनूभुवे ॥१२ ॥

गाधिश्च भूपतिः शुल्कमालोक्य तदुपाहृतम् ।
ऋचीकं भार्गवं मेने सुतायाः पतिमुत्तमम् ॥१३ ॥

तयोर्विवाहः संवृत्तः ततः सर्वजनोत्सवः।
भार्गवस्य ऋचीकस्य सत्यवत्याश्च सुभ्रुवः ॥१४॥

तां प्राप्य चारुसर्वाङ्गीं भार्यां भृगुकुलोद्वहः।
सन्तोषं परमं प्राप्तो रेमे बृन्दारको यथा ॥१५॥

असमाप्तम्



Sri K. Natesan and Kavyakantha Ganapati Muni
A Sketch by Madam Jane Adams




Bhagavan Ramana Maharshi and Ganapati Muni
by Madam Jane Adams

# लालिभाषोपदेशः

प्रथमो वर्णपटलः

१. अथैकां नवां भाषामुपदिशामः।

२. स नामतो लालिः क्रियते।

३. अइउण्

४. ऋऌक्

५. एओङ्

६. ऐऔच्

७. हयवरट्

८. लण्

९. ञमङणनम्

१०. झभञ्

११. घढधष्

१२. जबगडदश्

१३. खफछठथचटतव्

१४. कपय्

१५. शषसर्

१६. हल्

१७. इति त्रिचत्वारिंशल्लालिभाषायां मूलवर्णाः स्युर्यथाऽक्षरसमाम्नायम्।

१८. सूत्राणामन्त्या अनुबन्धाः।

१९. सन्निहितेन पूर्वेण सम्बद्धास्तन्मात्रस्य संज्ञायाम्।

२०. व्यवहितेन तस्य मध्यगानां च यथा पाणिनीयम्।

२१. यलामकार उच्चारणार्थोऽनुबन्धः।

२२. द्व्यनुबन्धोरर्द्वितीयं विना वा स्वसंज्ञायाम्।

२३. हल्बहुवचने प्रथमेन।

२४. एकवचनेऽनन्तरेण।

२५. अचः परो हो विसर्ग उच्चारणे।

२६. कखयोः परयोर्जिह्वामूलीयः।

२७. पफयोरुपध्मानीयः।

२८. चजाभ्यां पूर्वस्य दन्त्यत्वाय स्वयं त्वनुच्चारणः।

२९. लान्मूर्धन्यत्वाय।

३०. ळत्वाये युक्तं भवति।

३१. वात्ताडकत्वाय।

३२. आङ्ग्ल्यादि भाषास्विदमुच्चारणं दृष्टं निदर्शनम्।

३३. डाड्डळसन्धिस्थोच्चारणत्वाय।

३४. द्राविडभाषायामिदमुच्चारणं दृष्टं निदर्शनम्।

३५. अनयोस्ताडकसन्धिस्थसंज्ञाऽत्र शास्त्रे।

३६. दन्त्यचजयोर्मृदुपेशलसंज्ञा।

३७. पदान्ते मोऽनुस्वारः।

३८. पदमध्येऽप्यूष्मणः पूर्वः।

३९. ञो यात्।

४०. द्वौ ह्रस्वावेकजाती दीर्घः।

४१. एङौ ह्रस्वः।

४२. अनुक्तं संज्ञापरिभाषं पाणिनीयवत्।

द्वितीयः उपसर्गपटलः

१. उपसर्गाणामुपोदवापाप्यन्वध्यभ्यतीनां पोतुवापापे नो धे भे ते।

२. निर्निसोर्नी।

३. दुर्दुसोर्दू।

४. शेषाः संस्कृतवत्।

५. तिङन्तकृदन्तेभ्य एव पूर्वम्।

६. नित्यं तैः समस्यन्ते।

७. नानेकोपसर्गयोगः।

८. स्वरान्ताल्लणुत्तरपदे स्वरादौ।

९. संस्कृतसमसंज्ञासुनोपसर्गविक्रिया।

## तृतीयो धातुपटलः

१. धातवः संस्कृतात्।

२. इदितः सह परसवर्णीभूतेन नुमा।

३. रुधादिषु व्यञ्जनमन्त्यं स्वसवर्णानुनासिकपूर्वं स्यात्।

४. उभयत्र मपूर्वः स्यादस्पर्शः।

५. ऋतो धातुस्थस्य गुणः ।

६. ऋतो वृद्धिः ।

७. युवर्णयोर्धात्वन्त्ययोरयावौ ।

८. एदैतोराय् ।

९. ओदौतोराव् ।

१०. आतो लोपः ।

११. आदेश्चास्तेः ।

चतुर्थस्तिङन्तपटलः

१. सिद्धेभ्यो धातुभ्यः कर्तरि तिङामाटाळाडावाणाहः प्रथम-मध्यमोत्तमैकानेकवचनेषु ।

२. ईटीकीडीवीणीहः कर्मणि भावे च ।

३. अलादय उभयत्र प्रेरणार्थे ।

४. विभक्तिप्रत्ययादे वर्तमाने ।

५. ई भूतसामान्ये ।

६. आ भाविसामान्ये ।

७. ओ विध्यादिषु ।

८. ऐ शापाशिषोः ।

९. ऊ सम्भाव्यत्वोहे सापेक्षे निरपेक्षे च ।

१०. लृङर्थे च ।

११. अयादयो वा वर्तमानादिप्रत्ययाः पद्येषु ।

१२. वर्तमानवत्प्रदर्शने भूते वर्तमानप्रत्ययः ।

१३. धातुभ्य एव शतृक्त्वातुमुन्तव्यार्हशक्यार्थेषु वर्तमानादिप्रत्ययाः ।

१४. अयादयः प्रेरणे ।

१५. तदन्ता असमापकक्रियाः ।

१६. उत्तरत्रिके समापकक्रियाया अप्रयोगे यथायोगमस्तेः पूर्णरूपस्याध्याहारः ।

१७. पूर्वास्तिस्रो विशिष्टक्रियान्तरनिरपेक्षायां समाप्तिविवक्षायामस्तेः पूर्णक्रियारूपेण वक्ष्यमाणविधया समस्यन्ते ।

१८. शत्रर्थकान्तं वर्तमानान्तेन क्रियामध्ये ।

१९. भूतान्तेनापूर्णभूते ।

२०. भाव्यन्तेन भाविन्यपि क्रियाऽपूरणविवक्षायाम् ।

२१. लृङर्थकान्तेन सन्दिग्धवर्तमाने ।

२२. क्त्वार्थकान्तं वर्तमानान्तेन क्रियासमाप्तिनिर्धारणे ।

२३. भूतान्तेन पूर्णे भूते ।

२४. लृङर्थकान्तेन सन्दिग्धभूते ।

२५. तुमुन्नर्थकान्तं वर्तमानान्तेन भाविभाव्यत्वनिर्धारणे ।

२६. भाव्यन्तेन भाविनि शक्तौ गम्यायाम् ।

२७. लृङर्थकान्तेन सन्दिग्धभाविनि ।

२८. युष्मदस्मदोः प्रयोगो न वा पूर्णक्रियान्वयिनोः ।

### पञ्चमः कृदन्तपटलः

१. आनभावे धातुभ्यः ।

२. आत कर्तरि क्तस्यर्थे ।

३. ईत कर्मणि ।

४. आह कर्तरि ण्वुलोऽर्थे ।

५. आण शत्रर्थे सुबन्तविवक्षायाम् ।

६. ईण कर्मणि ।

७. अकर्तरि योगानुसारिणीषु नियतसंज्ञासु ।

८. इ कर्मणि ।

९. पूर्वपदसापेक्षासु चेमौ ।

१०. आनादयः कृतः ।

११. संस्कृताच्च सिद्धकृदन्तानि संज्ञायाम् ।

## षष्ठः सर्वनामपटलः

१. एतदिदमोर्दि ।

२. अदसोऽहा ।

३. लोकान्तरस्थस्य लोकान्तरस्यवा दृश्यवत्प्रयोगेऽदः शब्दः ।

४. इदमर्थे च पूजायाम् ।

५. युष्मदस्मदोर्वा मा ।

६. भवतो भो ।

७. युष्मदर्थे पूजायां भवच्छब्दः ।

८. प्रथमान्वय्येव संस्कृतवत् ।

९. तद्यदोर्हाजो ।

१०. किमः को ।

## सप्तमो नामशेषपटलः

१. अनव्यानि शुद्धप्रातिपदिकानि च संस्कृतात् ।

२. स्त्रीप्रत्ययान्तानि च नामानि ।

३. संज्ञायामेव समासाः ।

४. कृदन्तादीनि नामानि ।

५. अ स ओ नामान्त्यस्य ।

६. ऋ य लोरूपधान्त्ययोररा ।

७. शेषस्वरयलोः स्वरसवर्णदीर्घः ।

८. नैकस्वरे ।

९. तत्र नाम्न आदन्त्यागमः ।

१०. आदेश उरन्त्यस्य ।

११. जातस्यापत्यमित्यर्थे सिद्धनामतः ।

१२. जी गोत्रापत्यमित्यर्थे ।

१३. टो इदमित्यर्थे ।

१४. टा तत्रजातमित्यर्थे ।

१५. वन्त मतुबर्थे ।

१६. जाप्रभृतयः प्रत्ययास्तद्धिताः ।

१७. न तद्धितान्तात्पुनस्तद्धितः ।

१८. संस्कृताच्च सिद्धतद्धितान्तानि संज्ञायाम् ।

१९. न तद्धितेन नाम्नो नामत्वक्षतिः ।

२०. नाम्नां प्रातिपदिकसंज्ञा ।

अष्टमः सुबन्तपटलः

१. प्रातिपदिकेभ्यः प्राणिनि पुंस्येकानेकवचनयोर्नरौ ।

२. पुंदेवतात्मनि च तद्गुणविवक्षायाम्।

३. स्त्रियां मलौ।

४. स्त्रीदेवतात्मनि च तद्गुणविवक्षायाम्।

५. अज्ञातलिङ्गे तषौ।

६. अविवक्षितलिङ्गे च।

७. युष्मदस्मदोश्च।

८. अप्राणिनि कचौ।

९. स्थावरा अप्राणिवत्।

१०. आ ई ऊ ए ऐ ओ औ सप्तसु विभक्तिषु सलिङ्गप्रत्ययात्प्रातिपदिकात्।

११. ह्रस्वो वा पूर्वेषां त्रयाणां पद्येषु।

१२. प्रथमैकवचने लिङ्गविभक्तिलोपो वैकलिङ्गानां भाषायां च।

१३. सम्बोधने विभक्तिलोपः।

१४. तदा हे पूर्वं पदं न वा।

१५. विशेषणस्य लिङ्गवचनविभक्तयो विशेष्यवत्।

१६. नात्र पूजायमेकस्यानेकवचनम्।

१७. श्रीपूर्वं व्यक्तिनामपूजायाम्।

१८. न गुणाधायके सति विशेषणे।

१९. असति च पद्येषु वा।

२०. विशेषणानि विशेष्यात्पूर्वं गुणभूतानि।

२१. परस्ताद्विधेयानि।

२२. पद्येष्वेष न नियमः।

२३. विभक्त्यर्थाः संस्कृतवत्।

## नवमः समासपटलः

१. अथेह समासाः।

२. द्वयोरेव भवन्ति ।

३. द्वितीयान्तमाताहाणान्तैः कर्मभूतम् ।

४. तृतीयान्तमीतेहेणान्तैः कर्तृभूतम् ।

५. अदिदन्ताभ्यां च कृदन्ताभ्यामुभे संज्ञायां समस्तायाम् ।

६. अपादानभूतं पञ्चम्यन्तमन्वितैरकर्मकैराताहाणान्तैः ।

७. अदन्तेन च तादृशेन संज्ञायां समस्तायाम् ।

८. अपादानपञ्चम्यन्तेनाधिकरणसप्तम्यन्तं व्याख्यातम् ।

९. शेषषष्ठ्यन्तं सम्बन्धिना ।

१०. कर्तरि षष्ठ्यन्तमन्वितेनाकर्मकेणानान्तेन ।

११. कर्मणि षष्ठ्यन्तं सकर्मकेण ।

१२. विशेषणं विशेष्येण ।

१३. द्वन्द्वः समुच्चयार्थे बहूनामपि ।

१४. विशेषणानां च ।

१५. समुच्चितविशेषणजालं च विशेष्येण प्राग्वत् ।

१६. कर्मधारयान्मतुबर्थीयोऽत्र बहुव्रीहिस्थाने ।

## दशमोऽव्ययपटलः

१. अथाव्ययानि ।

२. यबपेशलमूदुगशसठधा एदन्ताः क्रमेण प्रथमे स्थाने सङ्ख्यावाचिनः ।

३. द्वितीयस्मिन्नादन्ताः ।

४. तृतीयस्मिन्नीदन्ताः ।

५. ओदन्ताश्चतुर्थे ।

६. ऊदन्ताः पञ्चमे ।

७. एदन्ताः षष्ठे ।

८. आदन्ताः सप्तमे ।

९. अमन्ता अष्टमे ।

१०. सङ्ख्येयवाचित्वे सङ्ख्यावचनेभ्यो ल ।

११. तदन्तानि प्रातिपदिकवत् ।

१२. ङ्गिण्डिन्दिम्बिल्लिश्चित्तिक्रमादधिकरणापादानप्रकारकालप्रयोजन-प्रमाणकारणार्थाः ।

१३. नित्यं सर्वनामपूर्वाः ।

१४. तेषु सर्वनामान्त्यस्य दीर्घस्य ह्रस्वः ।

१५. देर्दो लोपः ।

१६. सर्वस्यर्वस्य ।

१७. इतरस्येरयोः ।

१८. उभयस्यो यं योः ।

१९. पण्डिरिण्डिसीमाऽभिन्याप्त्योः पर्यन्ते ।

२०. चण्डिदण्डिप्रभृतौ ।

२१. येम्बि सकृत्।

२२. एतेन द्विवारमित्यादिषु बेम्बिप्रभृतयो व्याख्याताः।

२३. शम्बियुगम्बि शश्वद्युगपत्।

२४. सक्यं धक्यं सम्यग्धिक्।

२५. रस्ता लस्ता सह विना।

२६. बल्हिकञ्चिभृशमीषत्।

२७. कया किम्।

२८. दुस्ता शस्ता दूरे समीपे।

२९. रञ्चि चिरम्।

३०. शम्पी शङ्गी शनैः शीघ्रम्।

३१. थं मुधा।

३२. वस्तोदिविदोषाराविप्रातर्दिवा सायं नक्तं।

३३. षञ्चिपुरोपिञ्चितिरः पुरः पश्चात्।

३४. पोरिधोरि उपर्यधः।

३५. मङ्का कामम्।

३६. वे इव।

३७. ओहो अहो।

३८. सद्दि सद्यः।

३९. रन्ति मध्ये।

४०. मिषं मृषा।

४१. नै न।

४२. न धातुभिः समस्तं चेत्।

४३. अप्रातिपदिकैर्व्यञ्जनादिभिः।

४४. स्वरादिभिरन्।

४५. स्वरादिधातुभ्यः पूर्वस्मान्नतो लण्।

४६. मतश्च।

४७. मो मा।

४८. म धातुभिः समस्तं चेत्।

४९. वै एव।

५०. पौरा वौरा प्रागर्वाक्।

५१. था अथ।

५२. वाश्यं नूनम्।

५३. आहै ओम्।

५४. चनी चयी नीचैरुच्चैः।

५५. रायो प्रायः।

५६. नमो नमः।

५७. पुणी पुनः ।

५८. दिया चेत् ।

५९. तैरापैरा प्रत्यक्पराक् ।

६०. थो अथ किम् ।

६१. तञ्चि चित् ।

६२. कोन्दि तञ्चि कथंचित् ।

६३. हौ हि ।

६४. साक्षि साक्षात् ।

६५. दया षवा हया परषवा परहया अद्य श्वो ह्यः परश्वः परह्यः ।

६६. रन्तौ वाहौ अन्तर्बहिः ।

६७. हसा प्रसह्य ।

६८. राति प्रति ।

६९. इन्ति इति ।

७०. नेना नाना ।

७१. मिसा सामि ।

७२. लङ्कि किल ।

७३. खरे खलु ।

७४. चं च ।

७५. चम्पि अपि च ।

७६. परं अथापि ।

७७. थाहो अथवा ।

७८. दियाचं हन्दिचं यद्यपि तथापि ।

७९. पन्थू पृथक् ।

८०. साकं मिलित्वा ।

८१. ई इदमदसोरर्थे गुणभूते।

८२. आ तदः।

८३. अनन्तरकाले।

८४. मालि अलम्।

८५. वालि आवश्यकम्।

८६. मयं स्वयम्।

८७. बाडं बाढम्।

८८. बाडमिडस्य सन्धिस्थः।

८९. ढस्य वा संस्कृतसमेषु नामस्वसंयुक्तस्य।

९०. फाली यथा कथंचित्।

९१. फारी ऋजुमार्गेण।

९२. फादी कुटिलमार्गेण।

९३. फाकी नीचमार्गेण ।

९४. फाही श्लाघ्यमार्गेण ।

९५. अव्ययादेः फस्य ताडकः ।

## एकादशो वृत्तपटलः

१. अथात्रच्छन्दोविचितिः ।

२. अष्टदशैकादशद्वादशाक्षराः पादा गायत्रवैराजत्रैष्टुभजागताः ।

३. जरौ लगौ च गायत्रे पादे ।

४. तरौ लगौ च वा ।

५. भतौ लगावपि वा ।

६. भौगौ च वा

७. प्रमाणनाराचमाणवकचित्राः ।

८. द्वितीयादिर्नरसनानामन्यतमः पञ्चमादिर्ज एवेति समः ।

९. उत्तरो यश्चेद्विषमः ।

१०. तत्र द्वितीयादौ रस्य न निषेधः ।

११. द्वितीयादिर्गुर्वन्तश्चेत्पञ्चमादिर्न भराणामन्यतमो वा ।

१२. द्वयोर्द्वयोर्मैत्री ।

१३. गुर्वन्तविरतमात्रातुल्यद्विपञ्चको वैराजः ।

१४. मात्रासाम्यादत्र मैत्री ।

१५. जस्तजौ गौ त्रैष्टुभं पदं चक्रम् ।

१६. तौ जो गौ वज्रम् ।

१७. तभौ जो गौ शूलम् ।

१८. मस्तौ गौ गदाचतुर्थविरामा ।

१९. आयुधानां परस्परं मैत्री ।

२०. रो नरौ लगौ स्यन्दनम् ।

२१. रो नभौ गौ वाहनम् ।

२२. तयोर्मैत्री ।

२३. चतुर्मात्रैश्चतुर्भिर्गुर्वन्त्यसमापनैर्मात्रागणैः सुन्दरम् ।

२४. भो जः सो नलौ गाविति मात्रागणाश्चतुर्मात्राः ।

२५. तदेव द्वादशाक्षरं जागतम् ।

२६. चक्रवज्रशूलेष्वन्त्यगस्य स्थाने लगौ चेत् ।

२७. विषमं विना गायत्रं जगोत्तरम् ।

२८. उभयत्र सुन्दराण्यर्धविरामाणि ।

२९. यत्र गायत्राज्जगौ तत्राष्टमे विरामः ।

३०. सर्वत्र मैत्री पूर्ववत् ।

३१. त्रिभिर्गायत्रैः पादैर्गायत्रीवृत्तम् ।

३२. द्वौ पादौ सर्वत्र पूर्वमर्धम् ।

३३. तत्र विच्छित्तिर्नियता ।

३४. पादे यतिस्थाने च पदविरतिरेव न संहिताछेदः ।

३५. द्विपदाऽर्धवत् ।

३६. द्वाभ्यां गायत्राभ्यां जागतेन चोष्णिक् ।

३७. गायत्रजागतगायत्रैः ककुप् ।

३८. चतुर्भिर्गायत्रैरनुष्टुप् ।

३९. त्रैष्टुभाभ्यां वैराजेन च त्रिपदा विराट् ।

४०. गायत्राभ्यां जागतगायत्राभ्यां च बृहती ।

४१. पञ्चभिर्गायत्रैः पङ्क्तिः ।

४२. चतुर्भिर्वैराजैश्चतुष्पदा विराट् ।

४३. जागतगायत्राभ्यां द्विः सतो बृहती ।

४४. त्रैष्टुभैश्चतुर्भिस्त्रिष्टुप् ।

४५. जागतैर्जगती ।

४६. वैराजाभ्यां द्विपदा विराट् ।

४७. तुल्यच्छन्दांसि पदानि मित्राण्येव भवेयुर्वृत्ते समविषमौ पादौ समविषमावेव भवेतामन्त्यस्तु समवत् ।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिर्लौलिभाषोपदेशः समाप्तः ।

# इतरग्रन्थाः

## सहायवल्लीस्तुतिः

भवार्दितानां भवतात्सहायः सहायवल्लीकरुणाकटाक्षः ।
यत्पातपूतो रमणोमहर्षिः परं लुलोके भगवान्गुरुर्नः ॥१ ॥

## चूतगुहास्तुतिः

पुण्या चूतगुहा सेयं रमणेन महर्षिणा ।
अधिष्ठिता सेवकानां पापहन्त्री विराजते ॥१ ॥

जगद्गुरूनहं वन्दे ब्रह्मविष्णुमहेश्वरान् ।
वाणीलक्ष्मीशिवानाथान्सृष्टिस्थित्यन्तकारिणः ॥२ ॥

सिद्धलक्ष्मीसमायुक्तं ब्रह्मविष्णुशिवात्मकम् ।
महागणपतिं वन्दे सर्वविघ्ननिवारणम् ॥३ ॥

ब्रह्म कोऽपि यं वदन्ति वेदपारगामिनः
पूरुषं पुरातनं गदन्ति यं परे बुधाः ।

मत्तवारणाननं समस्तलोककारणं
चिन्तयामि सन्ततं तमन्तरायवारणम् ॥४ ॥

## हरसहस्रम्

अरुणाचलरूपेण परिणाममुपागतम् ।
तेजोमयं परं ब्रह्म ज्ञानाय मम जायताम् ॥१ ॥

अरुणाचलरूपो नः करुणावरुणालयः ।
भुवनाधिपतिः कश्चिदवनाय प्रकल्पताम् ॥२ ॥

पद्यानामनवद्यानां मालां ग्रथ्नामि कामपि ।
अनुग्रहं यथाकुर्यादरुणो धरणीधरः ॥३ ॥

रसालङ्कारवस्तूनां ध्वनयो नेह शोभनाः ।
एको नाम ध्वनिः शम्भोरस्त्यादातुं विदां मनः ॥४ ॥

अलङ्क्रियन्तां चित्रार्थैः प्राचां वाचो विपश्चिताम् ।
शेषभूषणनामैव भूषणं भाषणस्य नः ॥५ ॥

केषाञ्चिद्वाचि माधुर्यमोजोऽन्येषां मनीषिणाम् ।
अस्माकं तु स्मरारातिगुणसंकीर्तनं गुणः ॥६ ॥

इदं आद्यं कवित्वेमे भव्यं काव्यं सतां मनः।
धिनोतु कोकिलस्येव चैत्रप्रारम्भकूजितम् ॥७॥

इह केषाञ्चिदेषा चेन्नसन्तोषाय का क्षतिः।
कृतिर्मुदे किं काकानां बाला कोकिलकाकली ॥८॥

कोटिं तारवतंसस्य पञ्चाक्षरमहामनोः।
पूरयित्वा गणपतिः पुरारिं स्तोतुमुद्यतः ॥९॥

दिश एव वसानस्य वशेयस्याखिलं जगत्।
तस्मै परस्मै देवाय ताताय मरुतां नमः ॥१०॥

अस्ति प्रेममहेश्वर त्वयि महत् ध्यातुं च वाञ्छामि ते
पादाम्भोजयुगं तथाऽपि चलतां चेतो न मे मुञ्चति।
कामाः सन्ति सहस्रशः पशुपते पश्चाद्ब्रवीम्यग्रतः
चित्तस्य स्थिरतां प्रदेहि करुणा यद्यस्ति ते वस्तुतः ॥११॥

## रुद्रगीतम्

भद्राणि नतानां कुर्वन्तमनन्तम्।
रुद्रं भुवनानां तातं भज पूतम् ॥१॥

आत्मा भुवनानां राजा च पिताऽयम् ।
नामास्य खलारेर्नित्यं खलु गेयम् ॥२ ॥

अष्टौ तनवस्ते कष्टापहाः सन्ति ।
तासां महिमानं धीराः कथयन्ति ॥३ ॥

विश्वाधिपते ते राजत्यविकारम् ।
आद्यं निरवद्यं द्यौर्देवशरीरम् ॥४ ॥

आर्द्रस्सदैव हृदये करुणातरङ्गैः
गङ्गातरङ्गपटलैरिव मौलिदेशे ।
देवस्तनोतु तुहिनांशुकिशोरधारी
संसारजातपरितापनिवारणं वः ॥५ ॥

पायान्मामभितस्तिष्ठन्तं तपसि ।
बिभ्राणः स शिवः कारुण्यं मनसि ॥६ ॥

## इन्द्रसप्तकम्

यदि निर्विबन्धपदवी महागुहा
यदि तत्र मूलशुचिशक्तिनिर्झरी ।
यदि देवराजकरुणोन्मुखं मनो
न किमप्यसाध्यमिह देहधारिणाम् ॥१ ॥

नरलोकदुर्विदबलस्थलाकृते-
मरुतां नृपस्य कथमुच्यतां कथा ।
बहुवारमार्यसमितिष्वितः
करुणैव केवलममुष्य याच्यते ॥२ ॥

त्वयि हेलयेतरमतानुयायिभि-
र्दुरितं यदिन्द्र मम पूर्वजैश्चितम् ।
पतयालु मे शिरसि पादसेविनो
विनिवारयस्व फलमस्य दारुणम् ॥३ ॥

कवितानिरङ्कुशतया प्रवर्तते
मम लोकवृत्तपरिकीर्तनेषु या ।
गुणवर्णनाय तव सा समुद्यता
मघवन्प्रपश्यति दिशं न कामपि ॥४ ॥

## रमणगीता

द्वितीये तु द्वितीयोऽत्र श्लोको ग्रन्थे स्वयं मुनेः ।
द्वितीयाध्यायगाः श्लोका अन्ये मेतं विवृण्वते ॥१ ॥

इतरत्र तु सर्वत्र प्रश्नार्थः प्रश्नकारिणः ।
उत्तरार्थो भगवतः श्लोकबन्धो मम स्वयम् ॥२ ॥

अयं गणपतेर्ग्रन्थमालायामुज्ज्वलो मणिः ।
गुरोः सरस्वती यत्र विशुद्धे प्रतिबिम्बिता ॥३ ॥

पूर्णा

अत्रेमे भवन्त्युपसंहारश्लोकाः

इन्द्रस्य वह्नेराकाशव्यापिनः शक्तिरद्भुता ।
ददाना प्रतिभां दिव्यां वाचो रम्यास्तनोतु मे ॥१ ॥

अवलम्ब्य ह्रहा दृष्टमितिवृत्तं पुरातनम् ।
वासिष्ठो वितनोत्येतां पूर्णां गणपतिः कथाम् ॥२ ॥

कथायामिह सम्वादपद्धतिर्नाटके यथा ।
प्रयोगो नाममात्रस्य तस्माद्वक्तुर्गिरः पुरा ॥३ ॥

सम्बुद्धिषु पदान्यत्र प्रकल्प्यन्ते यथोचितम् ।
यद्विशेषा न लभ्यन्ते पूर्वेषां नाटकादिषु ॥४ ॥

अर्धेन्दुरेखयोर्मध्ये सम्वादेषु कवेर्वचः ।
स्वगतत्वं प्रकाशत्वं वक्तुर्वा चेष्टितं भवेत् ॥५ ॥

कविवाक्येषु सर्वत्र प्रत्यक्षमिव भाव्यते ।
रङ्गकथायां सङ्क्षिप्य वृत्तान्तकथनादृते ॥६ ॥

कथायां यत्र रङ्गस्य प्रत्यक्षत्वेन भावना ।
तत्र कालो द्विधा सद्यो भूतवद्वर्तमानवत् ॥७ ॥

आवश्यकस्थलेष्वत्र क्रियते वर्णनं मितम् ।
न शुष्कं वर्ण्यते किञ्चिन्नासम्बद्धं च किञ्चन ॥८ ॥

***

प्राणेश्वरीराघवपूजितस्य प्रालेयरोचिः शिशुशेखरस्य ।
महेश्वरीसंश्रितकामधेनुः करोतु शं पर्वतवर्धनी नः ॥१ ॥

जानकीकरसरोजवालुका मूर्तयेमुषितराघवार्तये ।
रामनाथ इति नामशालिने शूलिने नटनशीलिने नमः ॥२ ॥

***

कोककोकनदकोपनमेकं पाकमाकलयते परिमौलि ।
नाकिलोकरमणाय नमस्यां एकचूतपतये रचयामः ॥१ ॥

***

अज्ञानध्वान्तानामसह्यरोगाग्निकीलसन्तप्तान् ।
भासुरशीतलदृष्टि प्रभयापरदेवताऽवतादस्मान् ॥१ ॥

***

अणिमाधर्मिज्ञानं पिता च सङ्कीर्त्यते परः पुरुषः ।
महिमाधर्मज्ञानं माता च समीर्यते प्रकृतिः ॥१ ॥

***

भगवती दुर्गादेवी

उक्षराजवाहनस्य जीविताद्गरीयसी
पक्षिराजवाहनादिवर्ण्यमानवैभवा ।
केकिलोकचक्रवर्तिवाहनेन पुत्रिणी
वारणारिसार्वभौमवाहना गतिर्मम ॥१ ॥

वैरिगणनिर्दलनखङ्गवरपाणे
वाससि पदोर्दशनवाससि च शोणे ।
नेत्रमिषपावकविशेषितलालाटे
पापमखिलं जहि मृगाधिपतिघोटे ॥२ ॥

विशालाक्षी

शारीरकमीमांसाटिप्पणी
मङ्गलाचरणपूर्वकोपोद्धातः

हृदये निखिलस्य विस्फुरन्तं बहिरप्यत्र जगत्त्रये ज्वलन्तम् ।
तपसा निरुपाधि केन गम्यं परमात्मानमहं शिवाख्यमीडे ॥१ ॥

दिनकर्तुरिव प्रभा ज्वलन्ती सित भानोरिव कौमुदी लसन्ती ।
परमस्य चितिर्विजानतादि विद्धाना च विनम्यतेऽस्मदम्बा ॥२ ॥

तिमिराणि न केवलं वचोभिः सदयापाङ्गविलोकितैश्चनृणाम् ।
हृदये प्रसरन्तिमर्दयन्तं भगवन्तं रमणं गुरुं नमामि ॥३ ॥

श्रुतिकोशगमञ्जनं दधाने भगवच्छङ्करपूज्यपादभाष्ये ।
मम वाणि भणावलोक्य तत्त्वं न विशालाक्षि भजस्व मौनमुद्राम् ॥४ ॥

***

श्रीचन्द्रशेखरबधूचरणारविन्दरोलम्बबालहृदयं सदयं नतेषु ।
श्रीचन्द्रशेखरयतीन्द्रसरस्वतीति नाम्ना प्रसिद्धममलं गुरुमानमामि ॥१ ॥

अन्तर्ध्वान्तं विलयन् अखिलजनस्यापि गुरुवराकारम् ।
श्रीकुम्भघोणनगरे किमपि परं विजयते ज्योतिः ॥२ ॥

अरुणधरणिधारिक्षेत्रमासाद्य सद्यः
स्मरणकरणमात्रान्मोक्षमादानदक्षम् ।
नगदृगिभशशांके शाकवर्षे गुरुः स
द्रविडविषयभाजां व्यासपूजामकार्षीत् ॥३ ॥

***

पञ्चभूतमयमेव विग्रहं हन्त पञ्चनदपण्डितो जहौ ।
तस्य कीर्त्तिरिति विश्रुतं पुरा चन्द्रगौरमधुनाऽपि दृश्यते ॥१ ॥

रामचन्द्रघनपाठिनाऽधुना तस्य कृत्यममलं प्रसाध्यते ।
पश्चिमोदधिमुपेयुषो रवेस्तारकानिकरकामिना यथा ॥२ ॥

प्रभवे वर्षे कर्कटराशौ विचरति देवे दशशतकिरणे ।
कृष्णे पक्षे शुभपञ्चम्यां पूर्वाभाद्रास्विन्दोर्दिवसे ॥१ ॥

भारद्वाजो रामचन्द्रो महात्मा वेदाचार्यो नैष्ठिकः सत्यसन्धः ।
पुण्यश्लोको भूमिमापूर्य कीर्त्या शोकापेतं शाम्भवं धाम भेजे ॥२ ॥

अध्यापने व्यसनमग्र्यतमं सदापि स्वाध्यायनित्यभजनादपि चाप्रमादम् ।
श्रद्धां परां विहितकर्मसुचक्वभूयः पश्याम नाकमुदडीयतरामचन्द्रः ॥३ ॥

स्वाध्यायप्रवचनधूतसर्वपापो रुद्राणीमनुवरजापपूतजन्मा ।
सन्ध्यादिप्रविमलकर्मनित्यसेवी नाकं चेन्न जयति शास्त्रमप्रमाणम् ॥४ ॥

रामचन्द्रघनपाठिना परं स्थानमुत्तममजीयताजरम् ।
शोणशैलनगरं तु वैदिकश्रेष्ठशून्यमभवद्गतप्रभम् ॥५ ॥

कर्मश्रद्धा यदि सुमहती वृत्तमत्यन्तनीचं
श्रेष्ठं वृत्तं यदि सुविमलं कर्मलोपो गरीयान् ।

एतद्युग्मं मिलितमलसद्रामचन्द्रेऽभिजाते
दृष्टान्तोऽयं भवति धरणी देवबृन्दस्य मान्यः ॥६ ॥

आसीदर्हो ब्रह्ममेधक्रियायाः सोऽयं ब्रह्माब्रह्म यज्ञेन पूतः ।
आसीदर्हः सत्कवेः श्लोकगानं प्राप्तुं सत्यामत्यजन्नार्यरीतिम् ॥७ ॥

भवतु गणपतेर्वागीशदासस्य सत्या
भजतु पदमशोकं रामचन्द्रो द्विजेन्द्रः ।
भजतु गुणपयोधेः कीर्तिशेषस्य तस्य
प्रविमलगुणसङ्घोवित्तवत्तस्य पुत्रान् ॥८ ॥

***

विद्वानेकत एष भाति मतिमन्माणिक्यशाणोपलः
पीयूषद्रवमाधुरीमदमुषां स्त्रष्टा गिरामन्यत ।
अन्ये चापि च पण्डिताः प्रमिलिताः वेदार्थपारङ्गताः
दुर्धर्षे सदसीदृशे परमहो मन्दः कथं चेष्टताम् ॥

महानटजटातटभ्रमदभ्रवेगोच्चलत्
सुपर्वतटिनीझरीतुलितभारतीडम्बरः ।
शिरः श्रवणशालिनां प्रतिपदं बलाच्चालयन्
अयं कविकुलोत्तमो भुवि विभाति कृष्णाभिधः ॥

मैथिलास्तु कवयन्ति नीलया द्राविडास्तु कवयन्ति बालया ।
तद्वचोऽमृतवितृप्तचेतसां किं नु वामनयनोष्ठलालया ॥

तारध्यानम्

बालताराधिपापीडां प्रौढताराधिपाननाम् ।
तारिणीं सर्वदुःखानां तारामम्बां भजामहे ॥

अथवा

ह्रस्वाम्बिकाद्वीप्यजिनवसाना लम्बोदरी नीलरुचिः परा वाक् ।
अष्टा हि भूषा करवालकर्त्री मुण्डोत्पलाढ्यैकजटागतिर्नः ॥

अथवा

तारा परावाक्कुहना पिशाची सिद्धीश्वरी सिद्धपतेर्वधूटी ।
न मन्मनोनिग्रहकृद्रिपुघ्नी ग्रन्थिच्छिदाऽऽनन्दकरी विचिन्त्या ॥

तारामन्त्रफलश्रुतिः

सकलमपि वा वेदार्णं वा गुणार्णमथापि वा
मुनिजननुतं तारामन्त्रं जपेद्यदि मानवः ।
अमृतजलदीभूतः पूतः प्रयोगविशेषवित्
स इह वसुधालोके धारा गिरामभिवर्षति ॥१ ॥

इममभिमुखीभूता शातोदरी कमलालया
हयगजघटापूर्णाऽभ्यर्णं समेत्य निषेवते ।
सविबुधमिदं कृत्स्नं तस्य प्रयातिपुनर्वशं
प्रथितयशसां सिद्धीनां चाप्यमुं भजतेऽष्टकम् ॥२ ॥

सुविमलधियस्तस्य क्रोधात्दृगंबुधुतद्युती
रिपुजनवधूगण्डाभोगो भवेदुत पाण्डुरः ।
स खलु भुवनव्याप्तं चाप्तैः प्रमाणपुरःसरः
भणितमजरं भद्रं ज्योतिः परं परिपश्यति ॥३ ॥

## नवाक्षरीमन्त्रदेवताध्यानम्

मधुमाहिषशुम्भादिमहासुरविनाशिनीः ।
कृष्णपीतसिताध्यायेत्कालीलक्ष्मीसरस्वतीः ॥

## श्रीराममन्त्रध्यानम्

राममिन्दीवरश्यामं राजीवायतलोचनम् ।
ज्याघोषनिर्जितारातिं जानकीरमणं भजे ॥

## प्राणो दृष्टिरहंवृत्तिः

द्राविड्या शिष्यस्योपन्यासः । गैर्वाण्या सूत्रितमाचार्येण । तल्लिखितमुपलब्धमिह प्रकाश्यते । "प्राणः"प्रवचनविषयः १८-८-१९१७ क्री.श. । आह प्रवक्ता-

सप्त चाष्टौ च प्राणास्तथैकादश श्रुतिषु गीताः। उत्पन्नाः। श्रेष्ठश्चोत्पन्नो गीतः। अनुत्पन्नः शाश्वतश्चोक्तः। सर्वत्र चास्ति प्राणश्चलनलिङ्गात्। स्थावरेषु मनस्तु नास्तीति वदन्ति प्राणसहितेष्वपि। श्वासं प्राणं मन्यन्ते बाह्याः। ऊष्मा चानिर्वाच्यः शक्तिविशेषः। सोऽणुः। तं विना नेन्द्रियाणि चेष्टन्ते। इन्द्रियाणि च तद्विशेषत्वात् प्राणानाम्। पूर्वत्वात् ज्येष्ठः। इतरेषां भावाभावौ तद्भावाभावाभ्याम्। प्राणव्यापारो यदि नाडीषु विषमः सर्वेन्द्रियाण्युपहन्तुं शक्नुयात्। क्रियाशक्तिः प्राणः। ज्ञानशक्तिर्मनो लोकस्य व्यवहृतिः। एकस्थस्यापि शरीरे व्याप्तिर्दीपवत् प्राणस्य। शरीरं मनश्च प्राणोऽयं शास्ति गत्या। गतिः प्राणस्य स्वरूपम्। गतिः शक्तिरित्यनर्थान्तरम्। प्राण उत्पन्नो मुख्य इत्याचार्याः। बिम्बग्राही मुख्यः प्राणः स्फूर्तिस्थानं वा॥

मनोमयः प्राणशरीरो भारूप आत्मा श्रूयते। प्राणस्य मुख्या वृत्तिरनुभूतिः। सकृच्छ्रवणमेके अनुभूतिसाधनमूष तच्च साध्यम्। मनःप्राणशरीराणि परस्परायत्तानि। संस्कृतः प्राणः शुद्धः शुद्धये। स यदि नानुभवति मनो न प्रभवति। जीवः स्वेच्छया न गच्छति परम्। परस्तु जीवानुद्धर्तुं प्रयतते। आवृत्तिरतः प्राणशुद्धये॥

मुख्यप्राणस्य स्वरूपं परां शक्तिं विद्यात् सिद्धये। ईश्वरस्य तपोऽनुत्पन्नः प्राणः (तत् प्रथमं रूपम्)। भूतसारो मुख्यः प्राणः (तत् द्वितीयं रूपम्)। तद्वृत्तिरूपा अन्ये प्राणाः (तत् तृतीयं रूपम्)॥

मुख्यप्राणस्य ईश्वरतपोभूतेन प्राणेनैक्ये सायुज्यम्। सा मुक्तिर्व्यतिरेकतः। सा सम्पदन्वयतः। अस्यां हि सिद्धौ मन्त्रदृष्टिर्भवति-

"यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।
कामस्य यत्राप्ताः कामास्तन्न माममृतं कृधि ॥"
-पावमान्यो मन्त्राः-

आचार्यस्य द्राविडद्या प्रवचनं शिष्येण सूत्रितम्। गणपतेराचार्यस्य "तपः" १९-८-१९१७ क्री.श.। जीवब्रह्मादयो विषया उपन्यस्ताः। बहवो विषया विचारिताः। शिष्टं वदति वसिष्ठः। साधनं तपः तैत्तिरीये भृगूक्तिः। अभ्यस्तं तपसः साधनत्वं तत्र। अन्यास्वपि श्रुतिषु दृश्यते। एतदेव योग इति पतञ्जलिः। अर्थान्तरेषु जपादिषु तपश्शब्दः। न तत्र समन्वयः। औपनिषदं तप इह प्रकृतम्। तप आलोचने इति धातोः निष्पत्तिः। तपो हि दुरतिक्रमम्। येन सर्वं प्राप्यम्। न केवलं ब्रह्मप्राप्तिः। लोकसिद्धयोऽपि। आलोचनं नाम आत्मनाड्याम् एकस्यामेव वृत्तेर्गोपनम्। अन्यत्र देहेऽपि विक्षेपो न स्यात्। विस्मृतान्वेषणकालीनमालोचनं तप एव भवति। विच्छित्तिराहित्येनालोचनं तपः। तपसा निरुपाधिकं गम्यम्। सङ्कल्पेषु विषयग्रहणम्। अतस्तपसो विरलभावः। विषयग्रहणेन घनीभावो जडता। आलोचनेन बुद्धिः सूक्ष्मा भवति। कव्यादीनां तप एव शरणम्। अत एव वाल्मीकीः 'तपः' इत्यारम्भे। आलोचनस्य तपसः स्थिरीकरणाय लक्ष्याणि औपनिषदान्युपदिश्यन्ते ॥

१। संवर्गविद्या - सयुग्वा रैक्वः शकटस्याधः स्थितः। अविदितोऽस्य महिमा। अस्य जानश्रुतेश्च संवादः। संवर्गविद्योपदेशः। प्राण-गत्यन्ववेक्षणान्मथनम्। मथनात् कुम्भकम्। कुम्भकाच्छक्तेर्निधानम्। अन्यथा विक्षेपः। मूलस्थानं हृदयम्। अत्र सूक्ष्मनाडीप्रवेशः। शिरसि स्थूलनाडीप्रवेशः। रोगनिवृत्तिरमृतप्राप्तिश्च सूक्ष्मनाड्या। तया 'अहं ब्रह्म'

इत्यनुभवः स्यान्न तु जल्पनम्। साधनं गृह्णीयात्। न पाषाणवद्भवेत्। श्रीमहर्षेः 'हृदयकुहर'- श्लोके चिन्वतेत्येनेन आलोचनमेवोपदिष्टम्।

२। उपकोसलविद्या - जाबालस्य त्रयाणमग्नीनां प्रसादाल्लोकज्ञानम्। आचार्यमुखादक्षिपुरुषविद्यया स्वरूपप्रतिष्ठा। द्रष्टृत्वसामान्यादक्षिसूर्ययोरेकत्वम्। अन्तरक्षि दक्षिणम्; बाह्यमक्षि सव्यमिति रहस्यम्॥

३। वैश्वानरविद्या - छन्दोगानां श्रुतिः। अभिविमान आत्मा उपासितव्यः। अहमहमिति स्फुरन्नेष राजेव मुख्यः। एषा अहङ्कृतिर्हृदयान्निर्गच्छति। अस्यां हृदयाच्छिरः प्रविष्टायां ब्रह्माण्डसम्बन्धः स्थूलं ज्ञानं च। तस्माल्लीना स्यादहंवृत्तिर्हृदये। महर्षिश्लोके मज्जतेत्यत्र वृत्तेर्लयोऽभिप्रेतः। छान्दोग्येऽतःपरमेव पञ्चाग्निविद्योपदिष्टा। पञ्चप्राणानां प्रति पूर्वत्वादहंवृत्तेः॥

प्राणो दृष्टिरहंवृत्तिश्चेति त्रीण्युपासनान्युक्तानि॥

(श्रीमत्कपालिशास्त्रिणा विरचितवासिष्ठवैभवग्रन्थादुद्धृतोंऽशः)

# जयस्तवः

भारतचरित्रमीमांसेति ग्रन्थनिर्माणाय वासिष्ठगणपतिमुनिना ऋग्वेदसंहितातः सङ्कलिताः मन्त्राः

ऐन्द्रः जेता

१। मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥१।११।७॥

हिरण्यस्तूपः

२। आवः कुत्समिन्द्र यस्मिञ्चाक-
न्प्रावो युध्यन्तं वृषभं दशद्युम्।
शफच्युतो रेणुर्नक्षत द्या-
मुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥१।३३।१४॥

३। आवः शमं वृषभं तुग्र्यासु
क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम्।
ज्योक् चिदत्र स्थिवांसो अक्र-
ञ्छत्रूयतामधरा वेदनाकः ॥१।३३।१५॥

सव्यः

४। त्वं कुत्सं शुष्णहत्येष्वाविथा
रन्धयोऽतिथिग्वाय शम्बरम्।
महान्तं चिदर्बुदं नि क्रमीः पदा
सनादेव दस्युहत्याय जज्ञिषे ॥१।५१।६॥

५। त्वमेताञ्जनराज्ञो द्विर्दशा-
बन्धुना सुश्रवसोपजग्मुषः।
षष्टिं सहस्रा नवतिं नव श्रुतो
नि चक्रेण रथ्या दुषदावृणक् ॥१।५३।९॥

६। त्वमाविथ सुश्रवसं तवोतिभि-
स्तव त्रामभिरिन्द्र तूर्वयाणम्।
त्वमस्मै कुत्समतिथिग्वमायुं
महे राज्ञे यूने अरन्धनायः ॥१।५३।१०॥

नोधाः

७। अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥१।६१।१५॥

८। त्वं सत्य इन्द्र धृष्णुरेतान्
त्वमृभुक्षा नर्यस्त्वं षाट्।
त्वं शुष्णं वृजने पृक्ष आणौ
यूने कुत्साय द्युमते सचाहन् ॥१।६३।३॥

पञ्चभ्रातरः

९। स मन्युमीः समदनस्य कर्ता-
स्माकेभिर्नृभिः सूर्यं सनत्।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो
मरुत्वान्नो भवत्विन्द्र ऊती ॥१।१००।६॥

१० । रोहिच्छ्यावा सुमदंशुर्ललामी-
द्युक्षा राये ऋज्राश्वस्य ।
वृषण्वन्तं बिभ्रती धूर्षु रथं
मन्द्रा चिकेत नाहुषीषु विक्षु ॥१ ।१०० ।१६ ॥

११ । एतत्त्यत्त इन्द्र वृष्ण उक्थं
वार्षागिरा अभि गृणन्ति राधः ।
ऋज्राश्वः प्रष्टिभिरम्बरीषः
सहदेवो भयमानः सुराधाः ॥१ ।१०० ।१७ ॥

१२ । दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा
पृथिव्यां शर्वा नि बर्हीत् ।
सनत्क्षेत्रं सखिभिः श्वित्न्येभिः
सनत्सूर्यं सनदपः सुवज्रः ॥१ ।१०० ।१८ ॥

कुत्सः

१३ । यो व्यंसं जाहृषाणेन मन्युना
यः शम्बरं यो अहन्पिप्रुमव्रतम् ।
इन्द्रो यः शुष्णमशुषं न्यावृणङ्-
मरुत्वन्तं सख्याय हवामहे ॥१ ।१०१ ।२ ॥

१४ । नाना हि त्वा हवमाना जना इमे
धनानां धर्तरवसा विपन्यवः ।

अस्माकं स्मा रथमा तिष्ठ सातये
जैत्रं हीन्द्र निभृतं मनस्तव ॥१।१०२।५॥

१५। त्वां देवेषु प्रथमं हवामहे
त्वं बभूथ पृतनासु सासहिः।
सेमं नः कारुमुपमन्युमुद्भिद-
मिन्द्रः कृणोतु प्रसवे रथं पुरः ॥१।१०२।९॥

१६। शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र
यदावधीर्वि पुरः शम्बरस्य।
तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः ॥१।१०३।८॥

१७। अव त्मना भरते केतवेदा
अव त्मना भरते फेनमुदन्।
क्षीरेण स्नातः कुयवस्य योषे
हते ते स्यातां प्रवणे शिफायाः ॥१।१०४।३॥

१८। युयोप नाभिरुपरस्यायोः
प्र पूर्वाभिस्तिरते राष्टि शूरः।
अञ्जसी कुलिशी वीरपत्नी
पयो हिन्वाना उदभिर्भरन्ते ॥१।१०४।४॥

१९। प्रति यत्स्या नीथादर्शि दस्यो-
रोको नाच्छा सदनं जानती गात्।
अध स्मा नो मघवञ्चर्कृतादि-
न्मा नो मघेव निष्षपी परा दाः ॥१।१०४।५॥

२०। स त्वं न इन्द्र सूर्ये सो अप्स्वनागा-
स्त्व आभज जीवशंसे।
मान्तरां भुजमा रीरिषो नः
श्रद्धितं ते महत इन्द्रियाय ॥१।१०४।६॥

कक्षीवान्

२१। त्वमायसं प्रति वर्तयो गो-
र्दिवो अश्मानमुपनीतमृभ्वा।
कुत्साय यत्र पुरुहूत वन्व-
ञ्छुष्णमनन्तैः परियासि वधैः ॥१।१२१।९॥

२२। पुरा यत्सूरस्तमसो अपीते-
स्तमद्रिवः फलिगं हेतिमस्य।
शुष्णस्य चित्परिहितं यदोजो
दिवस्परि सुग्रथितं तदादः ॥१।१२१।१०॥

२३। त्वमिन्द्र नर्यो याँ अवो नॄन्-
तिष्ठा वातस्य सुयुजो वहिष्ठान्।

यं ते काव्य उशना मन्दिनं दा-
द्वृत्रहणं पार्यं ततक्ष वज्रम् ॥१ ।१२१ ।१२ ॥

२४। त्वं सूरो हरितो रामयो नृ-
न्भरच्चक्रमेतशो नायमिन्द्र ।
प्रास्य पारं नवतिं नाव्याना-
मपि कर्तमवर्तयोऽयज्यून् ॥१ ।१२१ ।१३ ॥

परुच्छेपः

२५। सूरश्चक्रं प्र बृहज्जात ओजसा प्रपित्वे वाच-
मरुणो मुषायतीशान आ मुषायति ।
उशना यत्परावतोऽजगन्नूतये कवे
सुम्नानि विश्वा मनुषेव तुर्वणिरहा विश्वेव तुर्वणिः ॥१ ।१३० ।९ ॥

अगस्त्यः

२६। वह कुत्समिन्द्र यस्मिञ्चाकन्-
त्स्यूमन्यू ऋज्रा वातस्याश्वा ।
प्र सूरश्चक्रं वृहतादभीके-
ऽभि स्पृधो यासिषद्वज्रबाहुः ॥१ ।१७४ ।५ ॥

२७। रपत्कविरिन्द्रार्कसातौ
क्षां दासायोपबर्हणीं कः ।
करत्तिस्रो मघवा दानुचित्रा
नि दुर्योणे कुयवाचं मृधि श्रेत् ॥१ ।१७४ ।७ ॥

२८। त्वं हि शूरः सनिता चोदयो मनुषो रथम्।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥१।१७५।३॥

२९। मुषाय सूर्यं कवे चक्रमीशान ओजसा।
वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥१।१७५।४॥

गृत्समदः

३०। सनेम ये त ऊतिभिस्तरन्तो
विश्वाः स्पृध आर्येण दस्यून्।
अस्मभ्यं तत्त्वाष्ट्रं विश्वरूप-
मरन्धयः साख्यस्य त्रिताय ॥२।११।१९॥

३१। अध्वर्यवो यः स्वश्नं जघान
यः शुष्णमशुषं यो व्यंसम्।
यः पिप्रुं नमुचिं यो रुधिक्रां
तस्मा इन्द्रायान्धसो जुहोत ॥२।१४।५॥

३२। अध्वर्यवो यः शतमा सहस्रं
भूम्या उपस्थेऽवपज्जघन्वान्।
कुत्सस्यायोरतिथिग्वस्य विरान्-
न्यावृणग्भरता सोममस्मै ॥२।१४।७॥

३३। सो अप्रतीनि मनवे पुरूणी-
न्द्रो दाशद्दाशुषे हन्ति वृत्रम्।

सद्यो यो नृभ्यो अतसाय्यो भूत्-
पस्पृधानेभ्यः सूर्यस्य सातौ ॥२।१९।४॥

३४। स सुन्वत इन्द्रः सूर्यमा
देवो रिणङ्मर्त्याय स्तवान्।
आ यद्रयिं गुहदवद्यमस्मै
भरदंशं नैतशो दशस्यन्॥२।१९।५॥

३५। स रन्धयत्सदिवः सारथये
शुष्णमशुषं कुयवं कुत्साय।
दिवोदासाय नवतिं च नवे-
न्द्रः पुरो व्यैरच्छम्बरस्य॥२।१९।६॥

कुशिको विश्वामित्रो वा
३६। सतःसतः प्रतिमानं पुरोभू-
र्विश्वा वेद जनिमा हन्ति शुष्णम्।
प्र णो दिवः पदवीर्गव्युरर्च-
न्त्सखा सखींरमुञ्चन्निरवद्यात्॥३।३१।८॥

विश्वामित्रः
३७। ससानात्याँ उत सूर्यं ससा-
नेन्द्रः ससान पुरुभोजसं गाम्।
हिरण्ययमुत भोगं ससान
हत्वी दस्यून्प्रार्यं वर्णमावत्॥३।३४।९॥

वामदेवः

३८। आ दस्युघ्ना मनसा याह्यस्तं
भुवत्ते कुत्सः सख्ये निकामः।
स्वे योनौ नि षदतं सरूपा
वि वां चिकित्सदृतचिद्ध नारी ॥४।१६।१०॥

३९। यासि कुत्सेन सरथमवस्यु-
स्तोदो वातस्य हर्योरीशानः।
ऋज्रा वाजं न गध्यं युयूषन्-
कविर्यदहन्पार्याय भूषात् ॥४।१६।११॥

४०। कुत्साय शुष्णमशुषं नि बर्हीः
प्रपित्वे अह्नः कुयवं सहस्रा।
सद्यो दस्यून्प्र मृण कुत्स्येन
प्र सूरश्चक्रं वृहतादभीके ॥४।१६।१२॥

४१। सूर उपाके तन्वं१ दधानो
वि यत्ते चेत्यमृतस्य वर्पः।
मृगो न हस्ती तविषीमुषाणः
सिंहो न भीम आयुधानि बिभ्रत् ॥४।१६।१४॥

४२। अयं चक्रमिषणत्सूर्यस्य
न्येतशं रीरमत्ससृमाणम्।

आ कृष्ण ईं जुहुराणो जिघर्ति
त्वचो बुध्ने रजसो अस्य योनौ ॥४ ।१७ ।१४ ॥

४३ । अहं मनुरभवं सूर्यश्चाहं
कक्षीवाँ ऋषिरस्मि विप्रः ।
अहं कुत्समार्जुनेयं नृञ्जेऽहं
कविरुशना पश्यता मा ॥४ ।२६ ।१ ॥

४४ । यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते ।
मूषाय इन्द्र सूर्यम् ॥४ ।३० ।४ ॥

४५ । यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् ।
प्रावः शचीभिरेतशम् ॥४ ।३० ।६ ॥

४६ । उत शुषस्य धृष्णुया
प्र मृक्षो अभिवेदनम् ।
पुरो यदस्य संपिणक् ॥४ ।३० ।१३ ॥

गौरिवीतिः
४७ । अध क्रत्वा मघवन्तुभ्यं देवा
अनु विश्वे अददुः सोमपेयम्
यत्सूर्यस्य हरितः पतन्तीः
पुरः सतीरुपरा एतशे कः ॥५ ।२९ ।५ ॥

४८। नव यदस्य नवतिं च भोगा-
न्त्साकं वज्रेण मघवा विवृश्चत्।
अर्चन्तीन्द्रं मरुतः सधस्थे
त्रैष्टुभेन वचसा बाधत द्याम्॥५।२९।६॥

४९। उशना यत्सहस्यैश्रयातं
गृहमिन्द्र जूजुवानेभिरश्वैः।
वन्वानो अत्र सरथं ययाथ
कुत्सेन देवैरवनोर्ह शुष्णम्॥५।२९।९॥

५०। प्रान्यच्चक्रमवृहः सूर्यस्य
कुत्सायान्यद्वरिवो यातवेऽकः।
अनासो दस्यूँरमृणो वधेन
नि दुर्योण आवृणङ्मृध्रवाचः॥५।२९।१०॥

अवस्युः

५१। तदिन्नु ते करणं दस्म विप्रा-
हिं यद्घ्नन्नोजो अत्रामिमीथाः।
शुष्णस्य चित्परि माया अगृभ्णाः
प्रपित्वं यन्नप दस्यूँरसेधः॥५।३१।७॥

५२। त्वमपो यदवे तुर्वशा-
यारमयः सुदुघाः पार इन्द्र।

उग्रमयातमवहो ह कुत्सं
सं ह यद्वामुशनारन्त देवाः ॥५।३१।८॥

५३। इन्द्राकुत्सा वहमाना रथेना
वामत्या अपि कर्णे वहन्तु।
निः षीमद्भ्यो धमथो निः षधस्थान्-
मघोनो हृदो वरथस्तमांसि ॥५।३१।९॥

५४। वातस्य युक्तान्त्सुयुजश्चिदश्वा-
न्कविश्चिदेषो अजगन्नवस्युः।
विश्वे ते अत्र मरुतः सखाय
इन्द्र ब्रह्माणि तविषीमवर्धन् ॥५।३१।१०॥

५५। सूरश्चिद्रथं परितक्म्यायां
पूर्वं करदुपरं जूजुवांसम्।
भरच्चक्रमेतशः सं रिणाति
पुरो दधत्सनिष्यति क्रतुं नः ॥५।३१।११॥

गातुः

५६। त्यं चिदेषां स्वधया मदन्तं
मिहो नपातं सुवृधं तमोगाम्।
वृषप्रभर्मा दानवस्य भामं
वज्रेण वज्री नि जघान शुष्णम् ॥५।३२।४॥

५७। त्यं चिदर्णं मधुपं शयान-
मसिन्वं वव्रं मह्यादुग्रः ।
अपादमत्रं महता वधेन
नि दुर्योण आवृणङ्मृध्रवाचम् ॥५।३२।८॥

संवरणः

५८। पुरू यत्त इन्द्र सन्त्युक्था
गवे चकर्थोर्वरासु युध्यन् ।
ततक्षे सूर्याय चिदोकसि स्वे
वृषा समत्सु दासस्य नाम चित् ॥५।३३।४॥

५९। वित्वक्षणः समृतौ चक्रमासजो-
ऽसुन्वतो विषुणः सुन्वतो वृधः ।
इन्द्रो विश्वस्य दमिता विभीषणो
यथावशं नयति दासमार्यः ॥५।३४।६॥

अत्रिः

६०। वधूरियं पतिमिच्छन्त्येति
य ईं वहाते महिषीमिषिराम् ।
आस्य श्रवस्याद्रथ आ च घोषा-
त्पुरू सहस्रा परि वर्तयाते ॥५।३७।३॥

भरद्वाजः

६१। स यो न मुहे न मिथू जनो भू-
त्सुमन्तुनामा चुमुरिं धुनिं च।
वृणक्पिप्रुं शम्बरं शुष्णमिन्द्रः
पुरां च्यौत्नाय शयथाय नू चित् ॥६।१८।८॥

६२। प्र तत्ते अद्या करणं कृतं भू-
त्कुत्सं यदायुमतिथिग्वमस्मै।
पुरू सहस्रा नि शिशा अभि क्षा-
मुत्तूर्वयाणं धृषता निनेथ ॥६।१८।१३॥

६३। शतैरपद्रन्पणय इन्द्रात्र
दशोणये कवयेऽर्कसातौ।
वधैः शुष्णस्याशुषस्य मायाः
पित्वो नारिरेचीत्किं चन प्र ॥६।२०।४॥

६४। महो द्रुहो अप विश्वायु धायि
वज्रस्य यत्पतने पादि शुष्णः।
उरु ष सरथं सारथये क-
रिन्द्रः कुत्साय सूर्यस्य सातौ ॥६।२०।५॥

६५। स वेतसुं दशमायं दशोणिं
तूतुजिमिन्द्रः स्वभिष्टिसुम्नः।

आ तुग्रं शश्वदिभं द्योतनाय
मातुर्न सीमुप सृजा इयध्यै ॥६।२०।८॥

६६। त्वं वृध इन्द्र पूर्व्यो भू-
र्वरिवस्यन्नुशने काव्याय।
परा नववास्त्वमनुदेयं
महे पित्रे ददाथ स्वं नपातम् ॥६।२०।११॥

६७। त्वं कविं चोदयोऽर्कसातौ
त्वं कुत्साय शुष्णं दाशुषे वर्क्।
त्वं शिरो अमर्मणः परा ह-
न्नतिथिग्वाय शंस्यं करिष्यन् ॥६।२६।३॥

६८। त्वं रथं प्र भरो योधमृष्व-
मावो युध्यन्तं वृषभं दशद्युम्।
त्वं तुग्रं वेतसवे सचाहन्त्वं
तुजिं गृन्तमिन्द्र तूतोः ॥६।२६।४॥

सुहोत्रः
६९। त्वं कुत्सेनाभि शुष्णमिन्द्रा-
शुष्णं युध्य कुयवं गविष्टौ।
दश प्रपित्वे अध सूर्यस्य
मुषायश्चक्रमविवे रपांसि ॥६।३१।३॥

वसिष्ठः

७०। न त इन्द्र सुमतयो न रायः
संचक्षे पूर्वा उषाशो न नूत्नाः।
देवकं चिन्मान्यमानं जघन्था-
व त्मना बृहतः शम्बरं भेत्॥७।१८।२०॥

७१। त्वं ह त्यदिन्द्र कुत्समावः
शुश्रूषमाणस्तन्वा समर्ये।
दासं यच्छुष्णं कुयवं न्यस्मा
अरन्धय आर्जुनेयाय शिक्षन्॥७।१९।२॥

मेधातिथिमेध्यातिथी

७२। यत्तुदत्सूर एतशं वङ्कू वातस्य पर्णिना।
वहत्कुत्समार्जुनेयं शतक्रतुः त्सरद्गन्धर्वमस्तृतम्॥८।१।११॥

७३। त्वं पुरं चरिष्णवं वधैः शुष्णस्य सं पिणक्।
त्वं भा अनु चरो अध द्विता यदिन्द्र हव्यो भुवः॥८।१।२८॥

मेध्यातिथिः

७४। शग्धी नो अस्य यद्ध पौरमाविथ
धिय इन्द्र सिषासतः।
शग्धि यथा रुशमं श्यावकं कृप-
मिन्द्र प्रावः स्वर्णरम्॥८।३।१२॥

देवातिथिः

७५। यद्वा रुमे रुशमे श्यावके कृप
इन्द्र मादयसे सचा।
कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस
इन्द्रा यच्छन्त्या गहि ॥८।४।२॥

वत्सः

७६। नि शुष्ण इन्द्र धर्णसिं वज्रं जघन्थ दस्यवि।
वृषा ह्युग्र शृण्विषे ॥८।६।१४॥

विश्वमनाः

७७। तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने।
द्विता कुत्साय शिश्नथो नि चोदय ॥८।२४।२५॥

प्रियमेधः

७८। त्वोतासस्त्वा युजाप्सु सूर्ये महद्धनम्।
जयेम पृत्सु वज्रिवः ॥८।६८।९॥

पुरुहन्मा

७९। कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य आनयत्।
अजां सूरिर्न धातवे ॥८।७०।१५॥

श्रुतकक्षः

८०। मा न इन्द्राभ्याश्दिशः

सूरो अक्तुष्वा यमन् ।
त्वा युजा वनेम तत् ॥८ ।९२ ।३ ॥

द्युतानः

८१ । तिग्ममायुधं मरुतामनीकं
कस्त इन्द्र प्रति वज्रं दधर्ष ।
अनायुधासो असुरा अदेवा-
श्चक्रेण ताँ अप वप ऋजीषिन् ॥८ ।९६ ।९ ॥

८२ । अव द्रप्सो अंशुमतीमतीष्ठ-
दियानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्त-
मप स्नेहितिर्नृमणा अधत्त ॥८ ।९६ ।१३ ॥

८३ । द्रप्समपश्यं विषुणे चरन्त-
मुपह्वरे नद्यो अंशुमत्याः ।
नभो न कृष्णमवतस्थिवांस-
मिष्यामि वो वृषणो युध्यताजौ ॥८ ।९६ ।१४ ॥

८४ । अध द्रप्सो अंशुमत्या उपस्थे-
ऽधारयत्तन्वं तित्विषाणः ।
विशो अदेवीरभ्या चरन्ती-
र्बृहस्पतिनाऽयुजेन्द्रः ससाहे ॥८ ।९६ ।१५ ॥

८५। त्वं ह त्यत्सप्तभ्यो जायमानो-
ऽशत्रुभ्यो अभवः शत्रुरिन्द्र।
गूळ्हे द्यावापृथिवी अन्वविन्दो
विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥८।९६।१६॥

८६। त्वं ह त्यदप्रतिमानमोजो
वज्रेण वज्रिन्धृषितो जघन्थ।
त्वं शुष्णस्यावातिरो वधत्रै-
स्त्वं गा इन्द्र शच्येदविन्दः ॥८।९६।१७॥

विमदः

८७। युजानो अश्वा वातस्य धुनी
देवो देवस्य वज्रिवः।
स्यन्ता पथा विरुक्मता
सृजानः स्तोष्यध्वनः ॥१०।२२।४॥

८८। त्वं त्या चिद्वातस्याश्वागा
ऋज्रा त्मना वहध्यै।
ययोर्देवो न मर्त्यो
यन्ता नकिर्विदाय्यः ॥१०।२२।५॥

८९। आ न इन्द्र पृक्षसेऽस्माकं ब्रह्मोद्यतम्।
तत्त्वा याचा महेऽवः शुष्णं यद्धन्नमानुषम् ॥१०।२२।७॥

९० । मक्षू ता त इन्द्र दानाप्नस आक्षाणे शूर वज्रिवः ।
यद्ध शुष्णस्य दम्भयो जातं विश्वं सयावभिः ॥१० ।२२ ।११ ॥

९१ । अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम् ।
शुष्णं परि प्रदक्षिणि द्विश्वायवे नि शिश्नथः ॥१० ।२२ ।१४ ॥

वसुक्रः

९२ । प्र ते अस्या उषसः प्रापरस्या
नृतौ स्याम नृतमस्य नृणाम् ।
अनु त्रिशोकः शतमावहन्नृन्-
कुत्सेन रथो यो असत्ससवान् ॥१० ।२९ ।२ ॥

कृष्णः

९३ । कृतं न श्वघ्नी वि चिनोति
देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शक-
न्न पुराणो मघवन्नोत नूतनः ॥१० ।४३ ।५ ॥

वैकुण्ठः

९४ । अहमिन्द्रो रोधो वक्षो अथर्वण-
स्त्रिताय गा अजनयमहेरधि ।
अहं दस्युभ्यः परि नृम्णमा ददे
गोत्रा शिक्षन् दधीचे मातरिश्वने ॥१० ।४८ ।२ ॥

९५। अहमत्कं कवये शिश्नथं हथै-
रहं कुत्समावमाभिरूतिभिः।
अहं शुष्णस्य श्नथिता वधर्यमं
न यो रर आर्यं नाम दस्यवे ॥१० ।४९ ।३ ॥

९६। अहं पितेव वेतसूँरभिष्टये
तुग्रं कुत्साय स्मदिभं च रन्धयम्।
अहं भुवं यजमानस्य राजनि
प्र यद्भरे तुजये न प्रियाधृषे ॥१० ।४९ ।४ ॥

वम्रः

९७। स व्राधतः शवसानेभिरस्य
कुत्साय शुष्णं कृपणे परादात्।
अयं कविमनयच्छस्यमान-
मत्कं यो अस्य सनितोत नृणाम् ॥१० ।९९ ।९ ॥

## अनुबन्धः

कुत्सः

१। याभिः सूर्यं परियाथः परावति
मन्धातारं क्षैत्रपत्येष्वावतम्।
याभिर्विप्रं प्र भरद्वाजमावतं
ताभिरू षु ऊतिभिरश्विना गतम् ॥१ ।११२ ।१३ ॥

२। आ तक्षत सातिमस्मभ्यमृभवः
सातिं रथाय सातिमर्वते नरः।
सातिं नो जैत्रीं सं महेत विश्वहा
जामिजामिं पृतनासु सक्षणिम् ॥१।१११।३॥

३। अमी ये सप्त रश्मय-
स्तत्रा मे नाभिरातता।
त्रितस्तद्वेदाप्त्यः स जामित्वाय
रेभति वित्तं मे अस्य रोदसी ॥१।१०५।९॥

४। अमी ये पञ्चोक्षणो
मध्ये तस्थुर्महोदिवः।
देवत्रा नु प्रवाच्यं सध्रीचीनानि
वावृतुर्वित्तं मे अस्य रोदसी ॥१।१०५।१०॥

५। सुपर्णा एत आसते
मध्य आरोधने दिवः।
ते सेधन्ति पथो वृकं तरन्तं
यह्वतीरपो वित्तं मे अस्य रोदसी ॥१।१०५।११॥

६। त्रितः कूपेऽवहितो
देवान्हवत ऊतये।
तच्छुश्राव बृहस्पतिः कृण्वन्नं
हूरणादुरु वित्तं मे अस्य रोदसी ॥१।१०५।१७॥

७ । इन्द्रं कुत्सो वृत्रहणं शचीपतिं
काटे निबाळ्ह ऋषिरह्वदूतये ।
रथं न दुर्गाद्वसवः सुदानवो
विश्वस्मान्नो अंहसो निष्पिपर्तन ॥१ ।१०६ ।६ ॥

घोषा

८ । युवं कवी ष्ठः पर्यश्विना रथं
विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा
भरत निष्कृतं न योषणा ॥१० ।४० ।६ ॥

|| वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ||
Vāsiṣṭhakāvyakaṇṭhagaṇapatimuneḥ Granthamālā

# Collected Works of Vasishtha Kavyakantha Ganapati Muni

## Contents of all Volumes

### VOLUME 1


1. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration (Part One)**

| | | |
|---|---|---|
| **1.1.** | श्रीगुरुस्तुतिः *śrīgurustutiḥ* | Verses in praise of the guru lineage (5 verses) |
| **1.2.** | हेरम्बोपस्थानम् *herambopasthānam* | Verses praising the glory of Ganesha (40 verses) |
| **1.3.** | उमात्रिशती *umātriśatī* | Three hundred names of Goddess Uma (38 verses) |
| **1.4.** | उमाशतकम् *umāśatakam* | Verses in praise of Goddess Uma (100 verses) |
| **1.5.** | उमाऽक्षरमाला *umā 'kṣaramālā* | Verses extolling Goddess Uma in Sanskrit alphabetical order (50 verses) |
| **1.6.** | उमासहस्रम् *umāsahasram* | Adoration of the Divine Mother Uma (1000 verses) |

VOLUME 2

## 2. स्तोत्रग्रन्थमाला *stotragranthamālā*
## The Book of Adoration (Part Two)

| | | |
|---|---|---|
| **2.1.** | देवीस्तोत्रमञ्जरी *devīstotramañjarī* | Verses in praise of Goddess Uma (118 verses) |
| **2.2.** | श्रीत्रिपुरसुन्दरीगीतम् *śrītripurasunda-rīgītam* | Singing praise of Goddess Tripurasundari (18 verses) |
| **2.3.** | अमृताम्बापञ्चरत्नम् *amṛtāmbā-pañcaratnam* | Verses in praise of Amritamba – the consort of Narasimha (5 verses) |
| **2.4.** | सौन्दर्याम्बानिर्वाण-षट्कम् *soundaryāmbā-nirvāṇaṣaṭkam* | Verses on the liberation of Saunda-ryamba – the mother of Sri Ramana Maharshi (6 verses) |
| **2.5.** | रेणुकाषट्कम् *reṇukāṣaṭkam* | Verses on Renuka – the mother of Parasurama (6 verses) |
| **2.6.** | रेणुकासप्तकम् *reṇukāsaptakam* | Verses in praise of Goddess Renuka (7 verses) |
| **2.7.** | इन्द्राणीसप्तशती *indrāṇīsaptaśatī* | Verses in praise of Goddess Indrani – the consort of the Vedic godhead Indra (700 verses) |

| | | |
|---|---|---|
| **2.8.** | प्रचण्डचण्डीत्रिशती<br>*pracaṇḍacaṇḍī-triśatī* | Verses in praise of Chinnamasta – one of the ten cosmic powers of the Divine Mother (300 verses) |
| **2.9.** | मङ्गलगौरीस्तोत्रम्<br>*maṅgalagaurī-stotram* | Benedictory verses in praise of Goddess Gauri (8 verses) |

## VOLUME 3

### 3. स्तोत्रग्रन्थमाला *stotragranthamālā*<br>**The Book of Adoration (Part Three)**

| | | |
|---|---|---|
| **3.1.** | श्रीरमणचत्वारिंशत्<br>*śrīramaṇa-catvāriṁśat* | Verses in praise of Sri Ramana Maharshi (40 verses) |
| **3.2.** | शिवशतकम्<br>*śivaśatakam* | Verses in praise of Shiva (100 verses) |
| **3.3.** | शिवस्तवराजः<br>*śivastavarājaḥ* | Verses in praise of Shiva (72 verses) |
| **3.4.** | शिवसप्ततिनामस्तोत्रम्<br>*śivasaptati-nāmastotram* | Seventy names of Shiva as mentioned in the Veda (8 verses) |
| **3.5.** | इन्द्रसहस्रनामस्तोत्रम्<br>*indrasahasra-nāmastotram* | Verses having one thousand names of Indra as mentioned in the Rigveda (115 verses) |

| | | |
|---|---|---|
| 3.6. | इन्द्रसहस्रे प्रथमं शतकम्<br>*indrasahasre pathamaṁ śatakam* | Verses in praise of Indra (100 verses) |
| 3.7. | इन्द्रसहस्रे कटाक्ष-स्तबकः<br>*indrasahasre kaṭākṣastabakaḥ* | Verses extolling the graceful look of Indra (24 verses) |
| 3.8. | इन्द्रविंशतिः<br>*indraviṁśatiḥ* | Verses in praise of Indra (20 verses) |
| 3.9. | इन्द्रसप्तकम्<br>*indrasaptakam* | Verses in praise of Indra (7 verses) |
| 3.10. | पवनाष्टकम्<br>*pavanāṣṭakam* | Verses in praise of Vayu (8 verses) |
| 3.11. | श्रीनृसिंहपञ्चरत्नम्<br>*śrīnṛsiṁha pañcaratnam* | Verses in praise of Sri Narasimha (5 verses) |
| 3.12. | श्रीयोगाञ्जनेयपञ्चरत्नम्<br>*śrīyogāñjaneya-pañcaratnam* | Verses in praise of Sri Yoganjaneya (5 verses) |
| 3.13. | तारकरामनामस्तुतिः<br>*tārakarāma-nāmastutiḥ* | Verses singing the name of Sri Rama (16 verses) |

| | | |
|---|---|---|
| **3.14.** | कृष्णाक्षरमाला<br>*kṛṣṇākṣaramālā* | Verses on Sri Krishna in Sanskrit alphabetical order (50 verses) |
| **3.15.** | रामगीता<br>*rāmagītā* | Verses on Sri Rama (9 verses) |
| **3.16.** | गीतमाला<br>*gītamālā* | Garland of ten songs praising different Vedic and other godheads (225 verses) |
| **3.17.** | शिवगीतम्<br>*śivagītam* | Verses praising Lord Shiva (25 verses) |
| **3.18.** | रमणगीतम्<br>*ramaṇagītam* | Verses praising Sri Ramana Maharshi (4 verses) |

VOLUME 4

## 4. तत्त्वग्रन्थमाला *tattvagranthamālā*
## The Book on Principles of Existence

| | | |
|---|---|---|
| **4.1.** | सदाचारबोधिनी<br>*sadācārabodhinī* | Code of conduct for human beings (81 verses) |
| **4.2.** | तत्त्वघण्टाशतकम्<br>*tattvaghaṇṭā-śatakam* | Verses on the principles of existence composed extempore in one hour as a part of an ashtavadhanam (100 verses) |

| | | |
|---|---|---|
| **4.3.** | *तन्त्रहृदयम्<br>*tantrahṛdayam* | A Tantra treatise on worshipping different aspects of the Divine Mother (192 verses) |
| **4.4.** | अक्षरावलिः<br>*akṣarāvaliḥ* | Verses describing Sanskrit syllables (alphabet) and their corresponding deities (21 verses) |
| **4.5.** | श्रीरमणगीता<br>*śrīramaṇagītā* | Teachings of Sri Ramana Maharshi (303 verses) |
| **4.6.** | सद्दर्शनम्<br>*saddarśanam* | Sanskrit rendering of an original Tamil text "*ulladu narpadu*" of Sri Ramana Maharshi (44 verses) |
| **4.7-9.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | These three (4.7-9) deal with several spiritual and metaphysical aspects of the principles of existence (679 verses) |
| **4.10.** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Verses dealing with the Hindu religious injunctions (39 verses) |

---

* Incomplete writings

VOLUME 5

## 5. सूत्रग्रन्थमाला *sūtragranthamālā*
## The Book of Aphorisms (Part One)

| | | |
|---|---|---|
| **5.1.** | महाविद्यासूत्रम् *mahāvidyāsūtram* | On the ten cosmic powers of the Divine Mother (705 aphorisms) |
| **5.2.** | राजयोगसारसूत्रम् *rājayogasārasūtram* | Essence of Rajayoga (103 aphorisms) |
| **5.3.** | इन्द्रेश्वराभेदसूत्रम् *indreśvarā bhedasūtram* | Proclamation of the non-difference between Indra and Ishwara (37 aphorisms) |
| **5.4.** | चतुर्व्यूहसूत्रम् *caturvyūhasūtram* | Four main aspects of the Indra of the Rigveda (162 aphorisms) |
| **5.5.** | रुद्रकुटुम्बसूत्रम् *rudrakuṭumba sūtram* | Description of the family of Rudra (42 aphorisms) |
| **5.6.** | सृष्टिसूत्रम् *sṛṣṭisūtram* | On Creation (33 aphorisms) |
| **5.7.** | ईश्वरमीमांसा *īśvaramīmāṁsā* | Description of the true nature of Ishwara (65 aphorisms) |
| **5.8.** | क्रियाशक्तिमीमांसा *kriyāśakti-mīmāṁsā* | On the Divine power of action (24 aphorisms) |

| | | |
|---|---|---|
| **5.9.** | सिद्धान्तसारसूत्रम्<br>*siddhāntasāra-sūtram* | The essence of decisive truth principle (42 aphorisms) |
| **5.10.** | मनीषासङ्ग्रहः<br>*manīṣāsaṅgrahaḥ* | A manual of spiritual science (120 aphorisms) |
| **5.11.** | अथ शान्तितपोबोधानां फलनिरूपणम्<br>*atha śāntitapobodhānāṁ phalanirūpaṇam* | Determining the fruits of peace, austerity and knowledge (9 aphorisms) |
| **5.12.** | गायत्रीव्याख्यानम्<br>*gāyatrīvyākhyānam* | Explanation of the Gayatri Mantra of Rishi Vishwamitra (48 aphorisms) |
| **5.13.** | योगव्याख्यानम्<br>*yogavyākhyānam* | On Yoga (48 aphorisms) |
| **5.14.** | सीताव्याख्यानम्<br>*sītāvyākhyānam* | On Sita – the consort of Sri Rama (51 aphorisms) |
| **5.15.** | कृष्णव्याख्यानम्<br>*kṛṣṇavyākhyānam* | On Sri Krishna (75 aphorisms) |
| **5.16.** | तत्त्वसामान्यमीमांसा<br>*tattvasāmānya-mīmāṁsā* | A brief enquiry into the principles of existence (20 aphorisms) |
| **5.17.** | *तत्त्वमीमांसा<br>*tattvamīmāṁsā* | The principles of existence (245 aphorisms) |

| | | |
|---|---|---|
| **5.18.** | प्रमाणपरीक्षा<br>*pramāṇaparīkṣā* | Explaining Pramana, a means to attain Prama or a certain Knowledge (50 aphorisms) |
| **5.19.** | समवायपरीक्षा<br>*samavāyaparīkṣā* | Explaining Samavaya or the perpetual co-inherence that lies between a substance and its qualities (14 aphorisms) |
| **5.20.** | अभावपरीक्षा<br>*abhāvaparīkṣā* | Explaining Abhava or non-existence, one of the six pramanas of the Vedanta philosophy (40 aphorisms) |
| **5.21.** | पञ्चजनचर्चा<br>*pañcajanacarcā* | On untouchability (89 aphorisms) |
| **5.22.** | गोत्रप्रवरनिर्णयः<br>*gotrapravara-nirṇayaḥ* | Determination of the family sub-divisions (200 aphorisms) |
| **5.23.** | विवाहधर्मसूत्रम्<br>*vivāhadharma-sūtram* | On Hindu laws and custom of marriage (151 aphorisms) |
| **5.24.** | शब्दप्रमाणचर्चा<br>*śabdapramāṇacarcā* | An enquiry into the authority of Vedas (166 aphorisms) |
| **5.25.** | जैमिनीयतर्कवार्तिकम्<br>*jaiminīyatarka-vārtikam* | A new interpretation of the aphorisms of Jaimini (348 aphorisms) |

| | | |
|---|---|---|
| **5.26.** | पञ्चममीमांसा<br>*pañcamamīmāṁsā* | On five kinds of people (130 aphorisms) |
| **5.27.** | दर्शनमाला<br>*darśanamālā* | On Metaphysics (121 aphorisms) |
| **5.28.** | गणपतिदर्शनम्<br>*gaṇapatidarśanam* | Spiritual thoughts of Ganapati Muni (95 aphorisms) |
| **5.29.** | *शक्तिदर्शनम्<br>*śaktidarśanam* | On the dynamic aspect of the Divine (109 aphorisms) |
| **5.30.** | साम्राज्यनिबन्धनम्<br>*sāmrājya nibandhanam* | A new constitution for India (560 aphorisms) |

## VOLUME 6

### 6. सूत्रग्रन्थमाला *sūtragranthamālā*
### The Book of Aphorisms (Part Two)

| | | |
|---|---|---|
| **6.1-16.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | An encyclopedic work on all aspects of the Hindu religion (1640 aphorisms) |
| **6.17.** | तत्त्वानुशासनसूत्राणि<br>*tattvānuśāsana-sūtrāṇi* | Instructions on the principles of existence (18 aphorisms) |
| **6.18-26** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Instructions on Dharma (839 aphorisms) |

| | | |
|---|---|---|
| **6.27-28** | *देवतामीमांसा<br>*devatāmīmāṁsā* | On Vedic deties<br>(162 aphorisms) |
| **6.29.** | *वासिष्ठदर्शनम्<br>*vāsiṣṭhadarśanam* | Doctrine of Ganapati Muni<br>(45 aphorisms) |
| **6.30.** | *सर्वार्थदर्शनम्<br>*sarvārtha-darśanam* | On the doctrine of direct perception (77 aphorisms) |
| **6.31.** | *आदिशास्त्रार्थसूत्रम्<br>*ādiśāstrātha-sūtram* | On the first hymn of the Rigveda (70 aphorisms) |
| **6.32.** | *वासिष्ठकामसूत्राणि<br>*vāsiṣṭhakāma sūtrāṇi* | On sexual love as understood by Ganapati Muni<br>(89 aphorisms) |
| **6.33.** | *महावार्तिकम्<br>*mahāvārtikam* | On the authenticity of Vedic texts (94 aphorisms) |

## VOLUME 7

**7.** भाष्यग्रन्थमाला *bhāṣyagranthamālā*
**The Book of Commentaries**

| | | |
|---|---|---|
| **7.1.** | *मूलग्रन्थप्रशंसा<br>*mūlagrantha-praśaṁsā* | A tribute to Rigveda |

| | | |
|---|---|---|
| 7.2. | *नूतनभाष्यकरणा-वसरकथनम्<br>*nūtanabhāṣyakaraṇā-vasarakathanam* | Necessity for a fresh and new interpretation of the Rigveda |
| 7.3-5. | *ऋग्वेदभाष्यम्<br>*ṛgvedabhāṣyam* | Introduction to a commentary on the Rigveda |
| 7.6. | *आदिवेदमीमांसा<br>*ādivedamīmāṁsā* | On the Rigveda |
| 7.7. | *ऋग्वेदविमर्शिनी<br>*ṛgvedavimarśinī* | Rigveda – an introduction |
| 7.8. | ऋग्वेदमन्त्रभाष्यम्<br>*ṛgvedamantra-bhāṣyam* | Explanation of some of the hymns of the 1st, 2nd and 7th mandala of Rigveda |
| 7.9. | *विश्वमीमांसा-प्रथमम् अक्षरप्रकरणम्<br>*viśvamīmāṁsā-prathamamakṣara-prakaraṇam* | On word-meaning relationship |
| 7.10. | *देवताकाण्डे द्वितीयं प्रकरणम्<br>*devatākāṇḍe dvitīyaṁ prakaraṇam* | Second chapter on Vedic godheads |

| | | |
|---|---|---|
| 7.11. | *ऐन्द्रसहस्रनाम-भाष्यम् *aindrasahasra-nāmabhāṣyam* | Commentary on thousand names of Indra |
| 7.12. | जैमिनीयसूत्रभाष्यम् *jaiminīyasūtra-bhāṣyam* | Commentary on the aphorisms of Jaimini |
| 7.13. | ईशोपनिषद्भाष्यम् *īśopaniṣadbhāṣyam* | Commentary on Ishopanishad |
| 7.14. | उपदेशसारभाष्यम् *upadeśasārabhāṣyam* | Commentary on Upadeshasara of Sri Ramana Maharshi |
| 7.15. | गुरुमन्त्रभाष्यम् *gurumantrabhāṣyam* | Commentary on Gurumantra |
| 7.16. | अग्नेः चतस्रो विभूतयः *agneḥ catasro vibhūtayaḥ* | Four emanations of Agni |
| 7.17. | दैवरातदर्शनम् अन्वयभाष्यम् *daivarāta-darśanam anvayabhāṣyam* | A commentary on the doctrine of Daivarata, a disciple of Sri Ganapati Muni |
| 7.18. | *मातृतत्त्वप्रकाशिका *mātṛtattva-prakāśikā* | A Sanskrit rendering of two chapters of Sri Aurobindo's *The Mother* |

| | | |
|---|---|---|
| **7.19.** | *शारीरकमीमांसा टिप्पणी *śārīrakamīmāṁsā-ṭippaṇī* | A note on the *Brahmasutra-bhashya* of Adi Sankara |
| **7.20.** | *वैदिकपदानामर्थाः *vaidikapadānām arthāḥ* | Meanings of Vedic words |

## VOLUME 8

### **8.** **आयुर्वेदज्योतिषग्रन्थमाला**
### *āyurvedajyotiṣagranthamālā*
### **The Book of Ayurveda and Astrology**

| | | |
|---|---|---|
| **8.1.** | चिकित्सानुशासनम् *cikitsānuśāsanam* | Instructions on medical treatment (384 aphorisms) |
| **8.2.** | प्राणतोषणम् *prāṇatoṣaṇam* | A treatise on the maintenance of a healthy life (108 verses) |
| **8.3.** | होरानिर्णयसङ्ग्रहः *horānirṇaya-saṅgrahaḥ* | A treatise on Astrology (81 verses) |
| **8.4.** | षोडशश्लोकी *ṣoḍaśaślokī* | Merits and demerits of the planetary positions (16 verses) |
| **8.5.** | त्रिभावफलचन्द्रिका *tribhāvaphala-candrikā* | A work on Keraliya Astrology dealing with Ayu – life-span, Kalatra – wife, Putra – son (89 verses) |

| | | |
|---|---|---|
| **8.6.** | गणककण्ठाभरणम् *gaṇakakaṇṭhā-bharaṇam* | On movements of the planets |

VOLUME 9

**9.** *भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
**A Treatise on the Mahabharata**

VOLUME 10

**10.** *पूर्णा *pūrṇā*
**Purna – A Novel**

VOLUME 11

**11.** प्रकीर्णकम् *prakīrṇakam*
**Miscellaneous Writings**

| | | |
|---|---|---|
| **11.1.** | गणपतिमुनेः पत्राणि *gaṇapatimuneḥ patrāṇi* | Letters of Ganapati Muni |
| **11.2.** | नवद्वीप-काव्यकण्ठः *navadvīpa-kāvya-kaṇṭhaḥ* | Ganapati Muni recieving 'Kavyakantha' title |
| **11.3.** | प्रास्ताविकपद्यानि *prāstāvikapadyāni* | Collection of stray verses |

11.4. सुकन्यादस्रसंवादः *sukanyādasra-saṁvādaḥ* — Dialogue between Sukanya and Ashwinideva from Mahabharata

11.5. पाण्डवधार्तराष्ट्रसम्भवः *pāṇḍavadhārta-rāṣṭrasaṁbhavaḥ* — Extempore verses on the origin of the Pandavas and Kauravas

11.6. *भृगुवंश इतिहासः *bhṛguvaṁśa itihāsaḥ* — History of Bhrigu lineage

11.7. लालिभाषोपदेशः *lalibhāṣopadeśaḥ* — A proposed new language

11.8. इतरग्रन्थाः *itaragranthāḥ* — Other texts

VOLUME 12

**12.** **अनुक्रमणी** *anukramaṇī*
**Index**



"Vasishtha Ganapati Muni (1878-1936) was a luminary of the first magnitude on the spiritual firmament of modern India. He was a versatile genius whose contribution in the many fields to which he turned his attention are yet to be fully assessed." **Sri M.P. Pandit, *Adoration of the Divine Mother*.**

"Kavyakantha Ganapati Sastri, .... played much the same role in the life and reputation of Bhagavan Sri Ramana Maharshi as Swami Vivekananda did in that of Sri Ramakrishna Paramahamsa. Sri Vasishtha Muni was a mighty spiritual personality in his own right,.... he recognized the uniqueness of Bhagavan's teaching, accepted him as his *guru* and proclaimed him as the Maharshi to the whole world. Those who want to understand the message of the Maharshi in its pristine purity have to study the Muni's redaction of the Master's teachings ..." **Sri S. Shankaranarayanan, *Bhavan's Journal*.**

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ॥

Collected Works of Vasishtha Kavyakantha Ganapati Muni


VOLUME 1 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part One)

VOLUME 2 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part Two)

VOLUME 3 स्तोत्रग्रन्थमाला *stotragranthamālā*
The Book of Adoration (Part Three)

VOLUME 4 तत्त्वग्रन्थमाला *tattvagranthamālā*
A Book on the Principles of Existence

VOLUME 5 सूत्रग्रन्थमाला *sūtragranthamālā*
The Book of Aphorisms (Part One)

VOLUME 6 सूत्रग्रन्थमाला *sūtragranthamālā*
The Book of Aphorisms (Part Two)

VOLUME 7 भा यग्रन्थमाला *bhāṣyagranthamālā*
The Book of Commentaries

VOLUME 8 आयुर्वेदज्योति ग्रन्थमाला *āyaurvedajyotiṣagranthamālā*
The Book of Ayurveda and Astrology

VOLUME 9 भारतचरित्रमीमांसा *bhāratacritramīmāṁsā*
A Treatise on the Mahabharata

VOLUME 10 पूर्णा *pūrṇā*
Purna - A Novel

**VOLUME 11** प्रकीर्णकम् ***prakīrṇakam***
**Miscellaneous Writings**

VOLUME 12 अनुक्रमणी *anukramaṇī*
Index